3.3.6)। मन्थि मुचि इत्येतयोः परतः पूर्वं पदं प्रथमान्तं भवति। मुचिग्रहणेन न तद्धातुनिष्पन्नं पदं गृह्यते। अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' (अष्टा. 1 2 55) इति धातोः प्रातिपदिकसंज्ञानिषेधेन धातुमात्रस्य पदत्वाभावात्। 'धानासोमान्मन्थिनः' (तै. सं 3. 1 10) 'स्वारं स्वारान्मन्थी' (तै. सं. 4 3 2) 'कस्मात्सत्यान्मन्थिपात्रम्' (तै. सं 6 4.10)॥ 'एत्रैतमेवं विद्वान्मन्थिनः'[25] (तै. सं 3.1.9) इत्यत्र 'पौनः पुन्यात्' (प. प्र 8) इति परिभाषया प्रथमान्तत्वं न भवति। 'साक्षादेवैनन्निरृतिपाशान्मुञ्चति' (तै. सं 5 2 4) 'स एवैनन्तस्मात्स्त्रामान्मुञ्चति' (तै. सं 2 1.6) 'दम्नोपोंभनान्मुञ्चति' (तै सं. 2.4. 13) 'देवत्रन्धान्मुमुचानाः' (तै. सं 7 .5. 9) 'विश्वान्मुञ्चत्वंहसः' (तै सं. 3.1 4) इत्यादि। मुख इत्येतस्मिन् परतः पूर्वपदं प्रथमान्तं भवति। 'त्रिष्टुङ्मुखो वै' (तै सं 7.2.8) 'जगन्मुखो वै' (तै. सं. 7 2 8) 'समगृह्णान्मुखेनैकं यन्मुखेन' (तै सं. 6 1 6) 'अन्यन्मुखं कुर्यात्' (तै. सं. 6 2 3) इत्यादि। रन् इत्येतदन्तं पदं मुखे परतः प्रथमान्तं न भवति। 'फल्गुनीपूर्णमासे दीक्षेरन्मुखम्'[26] (तै. सं. 7.4 8)॥14॥

नपुम्मतुवतू संख्येण्छिदिभ्यः [पूर्वके नति]।[27]

[मतुग्रहणेन आदेशरूपस्य वतोरपि सिद्धौ सत्यामपि पुनर्वतुग्रहणं][28] '[यत्तदेतेभ्यः] परिमाणे वतुप्' (अष्टा. 5.2.39) इति परिमाणार्थस्य वतोरपि स्वीकारार्थः। 'हविष्मन्निधनं पूर्वमहर्भाति'[29] (तै. सं. 7.1.4) 'महि षद् द्युमन्नमः'[30] (तै. सं. 3. 2. 8) 'सप्रत्नवन्नवीयसा'[31]

---

25 *SL* III 16'....विद्वान्....'

26 *SL* III 12'....दीक्षेरन्...'

27, 28 No gaps in Ms. Addded by the editor.

29 *SL* IV 10'हविष्मन्निधनं पूर्वम्...'

30 *SL* IV 7'....मत्....'

31 *SL* IV 9'....वत ....'

(तै. सं. 2 2. 12) 'तावन्मानं स्यात्' [32] (तै. सं. 2. 3. 1) तावन्नो दत्तेति (तै. स 6. 2. 4) 'कर्तं वा यावन्नानमे' [33] (तै. सं. 6 2 6) यावन्मासः' (तै. सं. 7.4.11) इत्यादि। नपुम् इति किम्? 'मघवन्मन्दिषीवहि [34] (तै. सं. 1. 8 5, 'अन्तर्यामि मघवन्मादयस्व (तै. सं 1.4 3) 'इन्द्रियावान्मदिन्तम (तै सं 1 2 3) 'भ्रातृव्यवान्नामावास्याम् (तै सं. 2 5 4)। संख्या ण् छिदि इत्येतेभ्यः पूर्वस्मिन् न इत्येतस्मिन् परतः पूर्वपदं प्रथमान्तं भवति। इण्छिदीति धातुग्रहणम्। 'एकान्नविंशत्यै स्वाहा' [35] (तै. सं. 7 2.12) 'एक-स्मान्नपञ्चाशमपश्यत्' [36] (तै. सं 7 4.7) तेनैव तृतीयसवनान्न यन्ति' [37] (तै. सं. 6 6 11) तेन वैश्वानरान्नेति [38] तै सं 5 ० ।) 'तेन क्षयान्न यन्ति' [39] (तै सं. 7.4.2) तेनैव मिथुनान्न यन्ति [40] (तै. सं. 7.6.9) 'अथो पात्रान्न छिद्यते' [41] (तै सं 5 6 2) इत्यादि। पूर्व एव पूर्वकः। 'अव्ययसर्वनाम्नाम् [अकच् प्राक्टेः] (अष्टा 5 3. 71) इत्यकच्। 'पूर्वादिभ्यो नवभ्यो वा' (अष्टा. 7 1 16) इति विकल्पात् स्मिन् न भवति। नतीति अकारसहिते नकारे इत्यर्थः। 'तपरस्तत्का-लस्य' (अष्टा. 1.1 70) इति न्यायात्। अन्यथा अकारो व्यञ्जना-नाम्' (तै. प्रा. 1 21) इति न्यायेन व्यञ्जनमात्रस्यैव सिद्धिर्भवति। तदा अकारव्यवधानदोषः स्यात्। एतेभ्यः पूर्व इति किम्? 'धर्मन्न सामन्तपत' [42] (तै सं 1.6 12) इत्येवमादि। 'अग्निचिन्मनुष्याणाम्' [43]

---

32 *SL* IV 4 '...तावत्....'

33 *SL* IV 8 '....यावत्....'

34 *SL* III 16 '...वन्...'

35, 36, *SL* IV 3 '....स्वाहैकाच्चैवमेकस्मात्....'

37, 38 *SL* IV 9 '....वैश्वानरात्....सवनात्....'

39 *SL* IV 4 '....क्षयात्....'

40, 41 *SL* IV 7 '....पात्रात्....मिथुनात्....'

42 *SL* III 18 '....सामन्....'

43 *SL* IV 4 '....चित्....'

(तै सं· 5. 4. 9) 'पर्वतश्चिन्महि' (तै · सं. 3. 1 .11) इत्येतयोः परिभाषया व्यक्तिः ।।

अथो भिषक्[44]पद्[45]न्मृद्वि[46]दद्या[47]द्धे या[48]दनन्न्यथ[49] ।।15।।

अथो इत्ययं खण्डपदाधिकारार्थः। भिषगादिपदं प्रथमान्तं भवत्युत्तमे परतः। 'शतभिषङ्नक्षत्रम्' (तैं सं 4 4 10)· पत्ने जनी- र्गृह्णामि' (तैं सं 3 5 ७) 'यज्ञाय व पत्ने जनीः सादयामि' (तै. सं 3 3 6) 'त्रिवृन्नो विष्ठया' (तै सं '. 4 12) 'नहि मृन्मयम्' (तै सं ४. 5 4, ['सोमो विश्वविन्नेता' (तै सं· 5, 6. 8] [50] 'अन्नाद्यान्निर्मृजामि' (तै सं 1 6 ०) 'भागधेयान्न च्यावयन्ति' (तै· सं 7 5 7)। अनद् इति पदं नि इत्येतस्मिन् तरतः प्रथमान्तं भवति। 'यस्येदं प्राणन्निमिषत्' (तै. सं 4 7 15)। नि इति किम्? योनेः प्राणन्निर्मिमीते' (तै सं. ३ 2. 6)। 'पण्णवत्यै' (तै सं· (तै. सं. 7. 2. 15) इत्यत्र षट्त्रिग्रामनिष्पूर्वः' (तै. प्रा. 7. 2) इत्यनेन प्रथमान्तत्वं सिद्धम्। 'आव्रश्चनान्नियेति'[51] (तै. सं. 2. 5. 1) इत्यस्य 'आतञ्च्यादाव्रश्चनात्' (प. प्र. ९४) इति ग्रहणाद् व्यक्तिः। 'वाश्रेव विद्युन्मिमाति' (तैं. सं. 3. ।. 1।) हविष्कृन्निधनम्'[52] (तै.सं 7. 1. 4) इत्येतयोः परिभाषया व्यक्तिः। अथशब्दोऽखण्डपदाधिकारार्थः ।। 15 ।।

---

44 *SL* IV 7'....पत्....'
45 *SL* IV 9 '···वृत्···'
46 *SL* IV 9'····वित ····'
47 *SL* IV 1 '....अद्यात्....'
48 *SL* IV 6 '....धेयात्....'
49 *SL* IV 1 '....अनन्नि ···'
50 No lacuna in Ms. The passage is added by the editor.
51 *SL* IV 9 '....व्रश्चनात् ···'
52 *SL* IV 10'....हविष्कृन्निधनं तथा ।'

अजयदजुष[53]दस्म[54]तृप्यत्तृपद्विव्यगस्मा-[55]
दसनद ।न[56]दख्यत्त्य[57]द्विदद्वागिवात्सत्[58] ।
अतृण[59]दनम[60]दनन्नायि[61] योप[62]त्वडन्वग्
बृहद[63]सद[64]भवन्ने वाय एतन्न नोपे[65]।। 16 ।।

नायि इति सप्तमी । नकारे परत इत्यर्थः । वाय इति पञ्चमी । वैकारादुत्तरमित्यर्थं । अजयदित्यादिपदं प्रथमान्तं भवति उत्तरपदं परतः । 'षड्तूनुदजयन्मरुत '[66] (तै. सं. 1. . 11) 'यस्याजु ।न्नमस्विनः' (तै.सं. 1. 6. 11) 'आरे अस्मन्निधेहि' (तै सं. 4. 5. 1) माऽत्रख्यन्मयि वसुः (तै. सं. 3. 2. 10) 'आयत्तृपन्मरुतः' (तै. सं. 2. 1. 11) 'न ते विव्यङ् महिमानम्' (तै. सं. 7. 4. 15) 'स एवास्मान्मृधः' (तै. सं. 2. 4. 7) 'पराचीमेवास्मान्निर्ऋतिम्' (तै. सं. 5. 2. 4) । 'आपो अस्मान्मातरः[67] (तै. सं. 1. 2. 1) इत्यत्र 'आपः पूर्वोद्धिरपान्नपाद स्मान्' (तै. प्रा 11. 8) इन्यनेन ग्रहणेन प्रथमान्तत्वं न भवति ।, 'असनन्मातरम्' (तै. सं. 1. 5. 3) 'घृतमने अजनन्नन्नमाने' (तै. सं.

53, 54 *SL* IV 1 ' अजु ।त्····अस्मत् '
55 *SL* IV 2 '....अस्मात्....'
56 *SL* IV 1 '····अजनत् ····'
57 *SL* IV 5 '....त्यत्····'
58 *SL* IV 9 ' इवसत् '
59 *SL* IV 1 '....अतृणत्····'
60 *SL* IV 2 '....अनमत् '
61 *SL* IV 3 '....नै परं त्वेनत्....'
62, 63 *SL* IV 7 'बृहत् योषत्····'
64 *SL* IV 1 '.. असत्····'
65 c.f. *SL* IV 3, 4 'इकारान्ते परत्र तु । पद एतत्
66 *SL* III 4, 5 '····अजयन्नपि । मपरं न····'
67 *SL* III 5 '····अस्मान्····'

4. 6. 2) 'व्यस्यन्महिषः' (तै. सं. 1. 5. 3)। पूर्वत्र स्व्यद्ग्रहणेनैव 'अप्यकारादि' (तै. प्रा 1. 52.) इति न्यायेन अस्यदिति सिद्धे पुनर्ग्रहणम् अत्र लक्षणे 'अप्यकारादि' (तै. प्रा. 1. 52) इतिन्यायो न भवतीति ज्ञापयति। तस्मादुत्तरत्र वाग्ग्रहणेन त्यद्ग्रहणेन च 'मामेवाङ्. नाभिमतिगाः' (तै. सं. 7. 2. 7) 'अत्यन्न सप्तिम्' (तै. सं. 4. 2. 4) 'अत्यन्न मिहे' (तै. सं 3. 1. 11) इत्यादिषु प्रथमान्तत्वं न भवति। 'प्रतित्यन्नाम' (तै. सं. 1. 8. 10) 'मा त्वा परिपरीविदन्मा त्वा' 68 (तै. सं. 1. 2. 9)। अत्र ब्राह्मणेनैव सिद्धे विददिति पुनर्ग्रहणं 'पदात्संशयितात्' (प. प्र. 7) इति परिभाषया 'परिपन्थिनो विदन्' (तै. सं 1. 2. 9.) इत्यत्र प्रथमान्तत्वं न भवतीति नियमार्थम्। 'वाङ्.म आसन्नसोः' (तै. सं 5. 5. 9) 'गच्छति वाङ्.न आसाम्' (तै. सं. 7. 5. 9 'तस्यै वाङ् माति' (तै. सं. 4. 3. 2)। इव इत्येतस्मात्परं सदिति पदं प्रथमान्तं भवति। 'प्रत्तमिव सन्न' (तै. सं 2. 2. 8)। इवादिति किम्? 'वामं वसु सन्न्यदधत' (तै. सं. 1. 5. 1) 'देवो ह्येर सन्मर्त्येषु' (तै. सं. ?. 1. 4)। 'पदात्संशयितात्' (प. प्र. 7) इति परिभाषया 'सदसि सन्मे भूयाः' (तै. सं. 1. 7. 5) इत्येतदपि प्रथमान्तं भवति। 'वज्रेण खान्यतृणन्नदीनाम्' (तै. सं. 2. 3 14). 'चन्द्रमसे समनमन्नक्षत्रेभ्यः' (तै. सं 7. 5. 2)। एनदित्येतत्पदं नै. इत्येतस्मिन् परतः प्रथमान्तं भवति। 'स्वदयत्येत्रैनन्नैरृतीः' (तै. सं. 5. 2. 4)। नायीति किम्? 'साक्षादेवैनन्निरृतिपाशात्' (तै. सं 5 2. 4)। 'न प्र योयन्न योयति' (तै. सं 1. 8. 22) 'षण्मार्जालीये' (तै. सं. 5. 4. 11) 'मा त्वान्वङ्.मा' (तै. सं. 1. 1. 2) 'कृणुता बृहन्नमः' (तै. सं 5. 7. 2) 'सभरा असन्नः' (तै सं. 4. 2. 5)। अभवदित्येतत्पदं नकारे परतः प्रथमान्तं भवति। 'तत्षोडश्यभवन्न वै'69 (तै. सं. 6. 6. 11)। ने इति किम्? 'ततस्ते पराभवन्मध्य-

---

68 c.f *SL* III 16 '....विदन् पन्थिनः पूर्वम्....'

69 *SL* IV 2 '....अभवत्....'

न्दिने'[70] (तै. सं 6. 2. 5)। वै इत्येतस्मात्परम् एतदिति पदं प्रथमान्तं भवति, नोप इत्येतस्मात्पूर्वं वर्जयित्वा। 'रेतो वा एतन्निधत्ते' (तै. सं. 5. 6. 8) 'अनयोर्वा एतन्नश्यति' (तै. सं. 2. 6. 3)। नोप इति किम्? 'छन्दांसि खलु वा एतन्नोपनमन्ति' (तै. सं 3. 4. 9)। वाय इति किम्? 'प्रमुमोक्त्वेतन्नमः' (तै. सं. 3. 1. 4)। एतन्नकारविषयम् 'एतन्मे गोपाय' (तै. सं. 3. 3.8) इत्यादिषु संशयाभावात्॥ 16॥

सख्यावताद्भद्र[71]वृत्र [72]द्दिद्यु[73]त्सीद[74]द्दरिद्रतः[75]।
हृ[76]न्मध्या[77]ज्जुहवदासन्याद्विड्यन्ननिरनन्नुषु[78]॥ 17॥

सख्यावतादिति। सख्याद् अवतादित्यर्थः। भद्रवृत्रादिति। भद्राद् वृत्राद् इत्यर्थः। दिद्युत्, सीदत्, दरिद्रत् इत्यर्थः। 'सख्यान्मा देवानाम्' (तै. सं. 1. 2. 10)। 'अनुदात्तमुदात्तान्तं वा' (प प्र 14) इत्यनेनैव सिद्धे अस्य ग्रहणं सुबन्तेषु स विधिर्निसर्गप्रवृत्त इति ज्ञापयति। तस्मात् 'संवाहुभ्यान्नमति' (तै. सं. 4. 6 2) 'अन्यान्नान्तरेव' (तै. सं. 1. 2. 1?) इत्यादिषु प्रथमान्तत्वं न भवति। 'अवतान्मा नाथितम्' (तै. सं. 1. 2. 12) 'भद्रान्न श्रेयः' (तै. सं

---

70 *SL* III 3 '....अभवन्....'
71 *SL* IV 7 '....भद्रात्....'
72 *SL* IV 9 '....वृत्रात्....'
73 *SL* IV 6 '....दिद्युत्....'
74 *SL* IV 9 '....सीदत्....'
75 *SL* IV 6 '....दरिद्रत्....'
76 *SL* IV 10 '....हृत्....'
77 *SL* IV 7 '....मध्यात् ...'
78 c.f *SL* IV 8
'....यत्प्रोक्तमेवं दृश्येत वर्जयेत्।
वपाभ्याद् हृणाभात्रः पूर्वम्....'

5. 7. 2) 'स देवता वृत्राग्निर्हूय' (तै. सं. 2. 5. 2) 'पतातिदिद्युन्न यंस्य' (तै. सं. 1. 7. 13) ['बर्हिषि सीदन्निहोता' (तै. सं. 4.1. 11)][79] 'दरिद्रन्नीललोहित:' (तै. सं 4. 5. 10) 'यत्ते परं ह्वन्नाम' (तै. सं 4. 4. 7) 'मध्यान्नीचादुच्चा' (तै. सं 2. 3. 14) 'जुह्वन्मनसा दिशो ध्यायेत्' (तै सं 5. 4. 7) 'आसन्यान्मा मन्त्रात्' (तै सं 3. 1.7) 'विण्मारुत:' (तै. सं. 3. 5. 7) । यदित्येतत्पदं निरादिपरं वर्जयित्वा प्रथमान्तं भवति। 'यन्नक्तमुपतिष्ठते' (तै. सं 1. 5. •) 'यन्नवकपाल स्त्रिवृता' (तै. सं 2. 2. 5) 'यन्निर्मन्थ्यं कुर्यात्' (तै. सं. 3. 1. 3) 'यन्म आत्मन:' (तै. सं. 3. 2. 5) । निरादिपरं वर्जयित्वेति किम् ? 'यन्निरयाचथा:' (तै सं 3. 1. 9) 'आयन्नर:' (तै. सं. 2. 4. 8, 'दृंहणा यन्नुदेथे' (तै. सं. 4. 7 15)। 'यन्नस्समान:' (तै· सं· 1. 3. 2, इत्यत्र 'पदात्संशयितात्' (प· प्र 7) इति परिभापया प्रथमान्तत्वं न भवति ॥ 17 ॥

त्य[80]त्तद्विप्रत्युपानुभ्य: पूर्वस्मिन्नपदे न तु ।
निर्युच्चे नयनैर्नेमिष्वपि[81] दिद्योच्च बन्धनात् ॥ 18 ॥

'प्रतित्यन्नाम राज्यम्' (तै· सं· 1· 8. 10) । तदिति पद प्रथमान्तं भवति। 'सीदत तन्नस्संस्कृतम्' (तै· सं· 1. 4. 43)। 'अथ तन्न प्राप्नुयात्' (तै· सं· 7. 1. 7) इत्यादि। उक्तस्य विधे: प्रतिषेध आरभ्यते–वि प्रति उप अनु इत्येतेभ्य: पूर्वं न इति पदे परत: प्रथमान्तं न भवति। 'यत्तन्न विस्रंसयेत्' (तै· सं. 6. 2. 9)। 'तन्न प्रतिप्रायच्छन्' (तै. सं. 6. 5. 8) 'तन्नोपाह्वयत' (तै. सं. 2. 4. 12)

---

79 There is a gap in Ms. Filled up by the editor.
80 *SL* IV 5 '....त्यत्....'
81 c·f *SL* IV 5, 6

'....तदिति प्रोक्तं न नैर्निर्नोपनप्रति ।
नेमिन्नानुनविस्रंसयेन्नयैषु परेषु तु ॥
अकुर्वत तदिन्त्यत्र प्रतिषेधो न चेष्यते ।'

'तन्नान्ववायन्' (तै. सं. 3. 2. 2)। पदग्रहणम् अकारव्यवधानदोषो मा भूदिति। अग्निशब्दो निषेधाकर्षकः। उदात्ते निरिति पदे नय नैः नेमि इत्येतेषु परतः पूर्वोक्तं पदं प्रथमान्तं न भवति। 'तन्निरिन्द्रियम्' (तै. सं. 6. 5. 8)। उच्च इति किम् ? 'तन्निर्बाधानाम्' (तै. सं. 5. 1. 10)। निसिति वक्तव्ये निरिति विकृतरूपग्रहणं व्यक्त्यर्थम्। अथवा निरिति रेफान्तोऽयं एकविंश उपसर्गः। 'निरनु (? रः कु)पः' (अष्टा. 7. 2 46, इति पाणिनीयदर्शनात्। 'प्र तन्नय प्रकराम् (तै. सं. 4. 2 2) 'तन्नैरृतमेककपालम्' (तै. सं. 1. 8. 1) 'तन्नेमिमृभवः' (त. सं 2. 1. 11)। 'दिद्योन्मा पाहि' (तै. सं. 1. 8. 14) 'उर्वारुकमिव बन्धनान्मृत्योः' (तै सं. 1. 8. 6)। चकारोऽनुक्तसमुच्चयार्थः। 'कनिक्रदन्नानदत्'[82] (तै. सं 4. 1. 4) 'उपरिष्ट न्निर्वपेत्[83] (तै. सं. 1. 2. 1) 'तस्मान्नोपस्थेयः'[84] (तै. सं. 1. 5. 9) 'अग्नयः पृथङ् मम' (तै. सं. 4. 4. 1) 'बृहती दिङ् मरुतः' (तै. सं. 4. 4. 2, 'अभून्मम सुमतौ (तै. सं. 4. 3. 11) 'श्रन्मे देवादधीरन्' (तै. सं. 7. 4. 1) इत्येतानि परिभाषया सिद्धानि। 'नकिष्टं कर्मणा नशत्[85] (तै. सं. 1. 8. 22) इति ग्रहणात्सिद्धम्। 'आश्विपन्मा तृणेषु' (तै. सं. 4. 6. 8) इत्येतत् 'श्विपतसप्त च (तै. सं. 4. 6. 8) इति संहितयैव व्यक्तम्॥ 8॥

अथ नो ने भवेदत्र न्यायः सप्तपरोदितः।
नाविपङ्गान्[86] कपालान्[87] भान्[88] म्रोचन्[89] सीद[90]न्नथन[91]यान्[92] ॥ 19 ॥

---

82 *SL* IV 4 '....कानिक्रदत्....'
83 *SL* IV 3 '....उपरिष्टात्....'
84 *SL* IV 5 '....तस्मात्....'
85 *SL* IV 6 '... नशत्....'
86 c. f. *SL* III 9 '....वलगान्....'
87 *SL* III 8 '....कपालान्....'

अथ इत्ययमधिकारः। नकारे परतः पदान्तो विकारी नकारः स्पष्टमुच्यत इति। अत्र प्र रणे सप्तपरोदितो न्यायो भवति। 'उदात्तादि' (प. प्र. 10) इत्यारभ्य 'गर्भेऽ सूर्यात्सन्' (प.प्र. 13) इत्यन्तैर्यो विधिरुक्तः सोऽत्र यथासम्भवं भवतीत्यर्थ। 'अध्वानोऽभूवन्न पन्थानः'[93] (तै. सं. 4. 5. 1) 'श्रृतमक्रन्न तु मा'[94] (तै. सं. 4. 5. 3) प्रत्यधुक्षन्न तु मयि'[95] (तै. सं 2. 5. 3) 'मधुमान्नो वनस्पतिः'[96] (तै. सं. 4. 2. 9) 'प्रपद्यन्त तान्न प्रति'[97] (तै, सं. 6. 5. 6) 'अपश्यत्तान्निरवपत्'[98] (तै. सं. 2. 2. 1) 'भ्रातृव्यान्नुदते'[99] (त. सं. 2. 6. 1) इत्यादीनि यथासम्भवं द्रष्टव्यानि। अवित्रमित्येतत्पदं नकारान्तं न भवति। उदात्तादिप्राप्तिः प्रतिषिध्यते। 'अवित्रन्नः पितुं कृणु' (तै. सं 1. 1. 13)। 'अहन्तेभ्योऽकरन्नमः' (तै. सं. 4.5.1) इत्यत्र अकरमित्येतत्पदं[100] '[अन्नाय] ऽंगिरस्वदकरम्' (तै. प्र. 12.7) इति ग्रहणेन सिद्धमिति न निषिध्यते। 'यत्ते सोमादाभ्यन्नाम जागृवि' (तै. सं. 1. 4. 1) इत्यादीनि पदानि 'पौनःपुन्यात्' (प. प्र. 8) इति परिभाषया सिद्धानि। वलगानित्यादीनि नकारान्तानि भवन्ति। 'वलगान्न्यखन्' (तै. सं. 6.2.11)'प्रतिपूरुषमेककपालान्निर्व-

---

88 *SL* III 13 '....भान्....'
89 *SL* III 14 '....भ्रोचन्....'
90 *SL* III 18 '...निषीदन्....'
91 *SL* III 7 '....एनान्....नुदे परे....'
92 *SL* III 15'....नपरो यान्....'
93 *SL* III 2 '....अभूवन्...'
94 *SL* III 1 '....अक्रन्....
95 *SL* III 2 '....'....अधुक्षन्....'
96 *SL* III 14 '....मधुमान् .'
97, 98*SL* III 11 '....नःनि तानित्येषु परेषु....'
99 *SL* III 14 '....भ्रातृव्यान्....'
100 The sūtra begins as follows:'अभ्यावर्तिन्नपूपम्....'

पति' (तै. सं 1. 8. 6) 'प्रजापतेर्विभान्नाम' (तै. सं. 1. 6. 5) 'एष निम्रोचन्निग्राभः' (तै. सं. 5. 4. 6) 'निषीदन्नो अपः' (तै. सं. 5. 1. 5) ।। 'सोमक्रयणान्नानुदिशेत्' 101 (तै. सं. 6. 1. 10) इत्यादीनि पदानि 'पदात्संशयितात्' (प. प्र. 7) इति परिभाषया सिद्धानि । अथेत्ययमखण्ड-पदाधिकारः । एनयान् इति । एनान् यान् इत्यर्थः । 'प्रत्येनान्नुदे' (तै. सं. 3. 5. 3) 'यान्निवपति' (तै. सं. 6. 3. 1) ।। 19 ।।

त्या[102]न्सन्निरि[103] पुरोडा[104]शांस्तू[105]र्वञ्ज्मन्नथ[106]ताद्वधौ ।
म्नाद्यान्द्वेषश्रुतिद्यावो धाश्रुद्धाम धिनोति च ।। 20 ।।

'त्यान्नु क्षत्रियान्' (तै. सं. 2. 1. 11) । सन् इत्येतत्पदं निरिति पदे परतो नकारान्तं भवति । 'इहैव सन्निरवदये' (तै. सं 3. 3. 8) । निरिति किम् ? 'वामं वसु सन्न्यदधत' (तै. सं 1. 5. 1) । पुरोडा-शान्निर्वपन्ति' (तै. सं 7. 5. 6) 'तूर्वन्नयामन्नेतशस्य' (तै सं 4. 6. 1) 'अज्मन्न ते विव्यक्' (तै. सं. 4. 6. 1) ।। 'ईडेन्यान्नमस्याम नमस्यान्'[107] (तै. सं. 2. 5. 9) इत्यत्र ईडेन्यानिति पदं मन्त्रांशेन वाक्यरूपेण व्यक्तम् । 'ऊषान्निवपति'[108] (तै. सं 5. 2. 3) 'पशून्निराजंत्'[109]

101 *SL* III 8 '....क्रयणान्....'

102 *SL* III 10 '...त्यान्...'

103 c. f. *SL* III 18 '....सन् निः सञ्जायसे....'

104 *SL* III 13 '....पुरोडाशान्....'

105 *SL* III 10 '....तूर्वन्....'

106 *SL* III 9 '....ज्मन्....'

107, 108 *SL* III 7 '....ईडेन्यान्....ऊषान्....'

109 *SL* III 13 '....पशून्...'

(तै. सं 1. 5. ') इत्यादीनि पदानि परिभाषया सिद्धानि। अथेत्ययमधिकारः। तकारात्तकारौ दकारधकारौ स्पष्टमुच्येते इति। 'पदान्तो विकारी' प. प्र 9) इत्येतदधिकारं विपरिणम्य पञ्चम्यन्तेन सम्बध्यते। पदान्ताद्विकारिणस्तकारात् परो दकारधकारौ उच्येते इत्यर्थः। म्नात् इत्यस्मात्परं द्याम् इति पदं दकारादि भवति। 'अस्तभ्नाद् द्यामृषभः' (तै. सं. 2. 2. 8)। म्नादिति किम्? 'सन्धाभूद्यामिन्द्रेण' (तै. सं. 1. 7. 8) 'तस्माद्यां समां सत्रम्' (तै सं 7. 5. 9) इत्यादि। 'आराच्चिद्द्वेषः' (तै. सं. 1. 7. 13 'युयोध्यस्मद्द्वेषांसि' (तै. सं. 4. 2 3) 'यद्द्याव इन्द्र ते' (तै सं 1. 4. 14) 'तस्मादेतावद्धा शिरः' (तै. सं. 6. 2. 9) 'यो वै श्रद्धामनारभ्य' (तै. सं. 1. 6.8) 'श्रद्धया वा श्रद्धया वा' (तै सं 7. 2. 3) इत्यादि। त्रिंशद्धाम विराजति' (तै सं. 1. 5. 3) 'दध्नोपरिष्टाद्धिनोति' (तै. सं. 2. 5. 3)। चकारोऽनुक्तसमुच्चयार्थः। 'यद्धावेदन्नाद्याद्धावेत्' (तै. सं. 5. 4. 9) 'यद्धानाभिर्हारियोजनम्' (तै. सं. 6. 5. 9) इत्यादीनि बहून्युदाहरणानि परिभाषया सिद्धानि। एतानीति किम्? 'सोमेन तद्वयम्' (तै. सं. 3. 2. 2) सन् सद्ध वै (तै सं. . 2. 9) 'अर्वमुद्धन्यात्' (तै. सं. 2. 2. 10) 'तद्धिरण्यम्' (तै. सं. 3. 4. 1) इत्यादि ॥ 20 ॥

अथापूर्वोऽभिनिष्ठानो घोषवत्संयुतोष्मसु।[1]
नावग्रहोपसर्गाः[2] स्युःस्थभवन्तिभवन्तुषु ॥[3] 21 ॥

अथेत्ययमधिकारः। घोषवत्संयुतोष्मसु परतः अपूर्वः पदान्तोऽभिनिष्ठानः स्पष्टमुच्यते इति। 'ऊष्मपरोऽघोषपरो लुप्यते का [ण्डमा] यनस्य' (तै. प्रा 9. 1) 'अवर्णपूर्वस्तु लुप्यते' (तै प्रा 9. 9) इति येषां पदानां संहितालक्षणं तान्यत्र गृह्यन्ते। अपूर्वः अवर्णपूर्वः। अभि-

---

1 c.f. I 1 ' अथ यजुस्संहितायामाकारप्लुतपूर्वो घोषवद्व्यञ्जनोत्तर शसकारपरो विसर्जनीयो येषु पदेषु लुप्यते तानि पदानि प्रवक्ष्यामि।'

2 *SL* I 23, 24 'न....अवग्रहोपसर्गौ....'

3 *SL* I 26 'स्युस्थभवन्तिभवन्तुपरः....'

निष्ठानो विसर्जनीय:। घोषवत्संयुतोष्मसु च परत: अवर्णपूर्वो विसर्जनीय: पदान्त: स्पष्टमुच्यते इत्यर्थ:। अवर्णपूर्व इति सामान्येनोक्ते दीर्घप्लुतावत्र विवक्षितौ। उत्तरत्र तादृशानामेव पदानामुपादानात्। अपूर्व इत्यस्यान्योऽप्यर्थ:। पूर्वावस्थायां नेह भवतीत्यपूर्व:। पदानां पूर्वावस्था संहिता। संहितायां लोपीत्यर्थ:। ननु विकारीत्यधिकारो विद्यते। लोपोऽपि विकारोऽस्तु। किमर्थोऽयं यत्न: ? मैवम्। 'अ:कार आगमविकारिलोपिनाम्' (तै. प्रा. 1. 23) इति पृथक्त्वेन ग्रहणात् लोपो न विकार:। नेति प्रतिषेध:। अवग्रह उपसर्गाश्च विसर्जनीयान्ता न भवन्ति। 'त्रैंशिकस्य द्वितीयस्य दशिनी' (प. प्रा. 23) इति वक्ष्यति। तदुद्दिश्य पुरस्तादपवादोऽनेन विधीयते। 'ऐन्द्रावैष्णवा गौरललामा:' (तै. सं. 5. 6. 16) 'ते विशालयूप आ लभ्यन्ते' (तै. सं. 5. 6. 22) तस्मादोषधय: परा भवन्ति' (तै. सं. 1. 6. 4) इत्यादि। स्यु: स्थ भवन्ति भवन्तु इत्येतेषु परत: पूर्वपदं विसर्जनीयान्तं भवति। 'ऋतवो मोहुका स्यु' (तै. सं. 6. 5. 3) अग्नेस्तेजस्या स्थ' (तै. सं. 1. 8. 11) 'प्रजानामुत्तमा भवन्ति (तै. सं. 7. 5 8) 'इमा भवन्तु विश्वत:' (तै. सं. 1. 3. 1) इत्यादि ॥ 21 ॥

मनुष्या[4] सुर[5] मासा[6] श्व[7] गण[8] देवे[9] ष्ट[10] गर्भ[11] दा:[12]।

---

4 *SL* I 57 '....मनुष्या ....'
5 *SL* I 3 '....असुरा:....'
6 *SL* I 57 '....मासा:....'
7 *SL* I 3 '...अश्वा:....'
8 *SL* I 28 '....गणा:....'
9 *SL* I 39 '....देवा: '
10 *SL* I 12 '....इष्टा:....'
11 *SL* I 28 '... गर्भा: ...'
12 *SL* I 39 '....दा:....'

धान[13]वात[14]ज्येष्ठ[15]वीर[16]यज्ञ[17]कामा[18] स्वतो न गा[19] ।। 22 ।।

गर्भदा इत्येप विसर्जनीयो मनुष्यादिभिः प्रत्येकमभिसम्बध्यते। एवमुत्तरत्रापि द्रष्टव्यम् । 'देवमनुष्या दिशो व्यभजन्त' (तै. सं. 6. 1 .1) 'यया मनुष्या जीवन्ति' (तै. सं. 1. 7. 2) 'तां देवासुरा व्यह्वयन्त' (तै. सं 1. 7. 1) 'असुरा वै निर्यन्तः' (तै. सं. 6. 2. 11) 'यद–र्धमासा मासाः' (तै. सं 5. 7. 2) 'मासा वै वाजा:' (तै. सं. 2. 5. 7) 'देवाश्वा यजमानः' (तै सं 1. 7. 4) 'अश्वा भवथ वाजिनः' (तै. सं 1. 7. 7) 'सप्त गणा वै मरुत:' (तै. सं 2. 2. 5) 'मा गणा मे मा वि तृपन्' (तै. सं. 3. 1. 8) 'वैश्वदेवा वै सजाता:' (तै. सं. 2. 1. 6) 'देवा मनुष्या.' (तै. सं. 2. 4. 1) 'अवेष्टा दन्दशूका:' (तै. सं 1. 8. 14) 'इष्टा देवता अथ कतमे' (तै. सं. 2. 6. 9) 'पृश्निगर्भा ज्योतिर्जरायु:' (तै. सं. 1. 4. 8) 'गर्भा स्पृताः' (तै. सं 4. 3. 9) 'चक्षुर्दा वर्चोदा वरिवोदा:' (तै. सं. 4. 6. 1) 'आयुर्मे दा रूपमसि' (तै. सं. 3. 3. 5) 'यातुधाना हेतिः (तै. सं 4. 4. 3) 'धाना मरुद्भ्यः' (तै. सं. 7. 5. 22) 'अवस्यु वाता वृहती:' (तै सं. 4. 4. 12) 'वृष्टिर्वाताः स्पृताः' (तै. सं. 5. 3. 4) 'इन्द्रज्येष्ठा वरुणराजान:' (तै. सं. 5. 5. 9) 'ज्येष्ठा वा एतान् ब्राह्मणाः' (तै सं 3. 5. 10) 'एता वै सुवीरा या' (तै. सं. 6. 4. 10) 'चत्वारो वीरा जायन्ते' (तै सं. 7. 1. 8) 'समृतयज्ञा यत्' (तै. सं 1. 6. 7) 'एव वो यज्ञा मदुदयनाः' (तै. स

---

13 *SL* I 43 '....धानाः....'

14 *SL* I 65 '....वाताः....'

15 *SL* I 32 '....ज्येष्ठा: ...

16 *SL* I 65 '....वीराः....'

17 *SL* I 58 '....यज्ञाः....'

18 *SL* I 27 '....कामा....'

19 *SL* I 28, 29 '....गाः । न स्वपूर्वः ।'

6. 1. 5) 'दानकामा मे प्रजा स्युः' (तै. सं. 2. 2. 8) 'कामा वा अग्नयः' (तै. सं 5. 8. 1)। स्व इत्येतस्मात्परं गा इति पदं विसर्जनीयान्तं न भवति। अर्थात् एतद्व्यतिरिक्तं गा इत्येतत्पदं विसर्जनीयान्तं भवतीति गम्यते। 'अग्रेगा नेतृणाम्' (तै. सं. 1. 3. 6) 'धन्वना गा धन्वना' (तै. सं 4. 6. 6)। न स्वत इति किम्? स्वगा वो देवाः' (तै. सं 1. 4. 44)॥ 22॥

स्था न प्रते[20]र्धा न श्रद्विसंख्यास्वेभ्यः सदा[21] न वै।
त्रैंशिकस्य द्वितीयस्य दशिनी मयुरादयः[22]॥ 23॥

स्था इत्येतत्पदं विसर्जनीयान्तं भवति प्रतेः परं वर्जयित्वा। 'ऋतु स्था य एवं वेद' (तै. सं. 5. 7. 6) 'जगत्स्था देवाः' (तै. सं. 2. 1. 11)। न प्रतेरिति किम्? 'प्रतिष्ठा य एवं वेद' (तै. सं. 3. 1. 2)। धा इत्येतत्पदं विसर्जनीयान्तं भवति श्रदादिभ्यःपरं वर्जयित्वा। 'वयोधा श्रुष्टी वीरः' (तै. सं 3. 1. 11) 'ओजो आधा निष्टनिहि' (तै. सं. 4 6 6)। श्रद्विसंख्यास्वेभ्य इति किम्? 'श्रद्धा वा आप' (तै. सं. 1 6. 8) 'यदेपा विधा विधीयते' (तै. सं. 5. 3 4) 'एकधा ब्रह्मण उप हरति' (तै. सं 2. 3. 2) 'चतुर्धा व्यक्रामन्' (तै. सं 2 2. 11) 'पञ्चधा विनिपद्य' (तै. सं 7. 5. 8) इत्यादि। 'धा असि स्वधा असि' (तै. सं. 1. 1. 9)। किमर्थमिदमुच्यते? 'न धामापासिपरो [बुध्नियाज्यापूर्वामिनन्तार्पे]' (तै. प्रा. 10. 13) इति किम् असिपरस्य धा इत्येतस्य प्रकृतिभाव उक्तः पूर्वस्य परस्य वेति सन्देहे परस्यैवेति नियमार्थम्'। एवमुत्तरत्र 'बुध्निया'

---

20 *SL* I 68, 69 '..स्थाः। न प्रतिपूर्वः।'

21 *SL* I 23, 25 'न....संख्यापूर्वश्च धा नित्यम्।'
26 'बहुधेति वर्जयित्वा।'
43 '....धाः।'
44 'न श्रद्विपूर्वः।'

22 *SL* I 22 'मयुरादयस्त्रयस्त्रैंशकद्वितीयदशिन्यो न वा एतेषु।'

(प. प्र. 46) इत्यत्रापि द्रष्टव्यम् । सदा नित्यमित्यर्थः । सदेति वचनं प्राप्त्यन्तरस्यापि प्रतिषेधार्थम् । 'बहुधा भवन्ति' (तै. सं. 5 6 1) । अत्र स्युःस्थादिप्राप्तिः । कथं बहुशब्दस्य संख्यात्वम् ? 'बहुगणवतुडति संख्या' (अष्टा. 1. 1. 23) इति पाणिनीये संख्यासंज्ञाविधानात् । 'चतुर्धा वा एताः' (तै. सं. 7. 2. 10) । अत्र न वा इति प्राप्तिः । अनेनैतज्ज्ञाप्यते—स्वरूपग्रहणविषयेष्वपि परिभाषाप्राप्तिर्न भवति । न वा एष इत्यनुवाको विसर्जनीयान्तो भवति । अनुवाकग्रहणेन तत्स्थानि पदानि लक्ष्यन्ते । मञ्चाः क्रोशन्तीतिवत् । एवमुत्तरत्रापि । 'या प्रथमा यज्ञम्' (तै. सं. 7. 2. 10) 'या द्वितीया यज्ञम्' (तै. सं 7. 2 10) शीर्षण्या निष्पदः' (तै. सं 7. 2 10) । अत्रेति किम् ? 'उत्तमा नीयते प्रथमा देवान् गच्छति' (तै. सं 7.1.7) 'या शीर्षण्या रशना रज्जुरस्य' (तै सं. 4 6. 8) । द्वितीयस्य त्रैंशिकस्य दशिनी [23] विसर्जनीयान्ता

---

23 Vide *SL* com. p 10 'त्रैंशिकमिति द्वितीयमग्निकाण्डमुच्यते । तत्पुनः यदेकेनेत्यादीनां त्रयाणां प्रश्नानां आद्यदशानुवाकरूपाः दशिनीवर्जिताः । त्रिंशदनुवाका एव त्रैंशिकम् । '

Vide also काण्डानुक्रमणिकाविवरणम्, Quoted in मूलयजुर्वेदसंहिता p 97

'यदेकेनादिकं प्रश्नत्रितयं त्रैंशिकं मतम् ।
इन्द्रायरोहितस्तेगानित्यादीर्दशिनीर्विना ॥'

Traimśikam is consisted of three praśnas beginning with यदेकेन (v. 5. 1), ie, v 5, 6 and 7, omitting the Anuvākas beginning with इन्द्राय राज्ञे सूकरः (v. 5. 11) रोहितो धूम्ररोहितः (v. 6. 11) and स्तेगान्द्रंष्ट्राभ्याम् (v. 7.11) The following table will give the details of Traimśikam and Daśinis:-

| Traimśikam | Daśīnis |
|---|---|
| v. 5. 1 - 10 | प्रथमदशिन्यः v. 5. 11-24(14 Anuvākas) |
| v. 6. 1 - 10 | द्वितीयदशिन्यः v. 6. 11-23 (13 Anuvākas) |

भवति । दशिनीति जात्यपेक्षमेकवचनम् । यदेकेनादि–प्रश्नत्रयानुवाकानां दशिनीवर्जित नां त्रैंशिकसंज्ञा । 'इन्द्राय राज्ञे' (तै. सं. 5. 5. 11) इत्यादि प्रश्नत्रयशेषाणां दशिनीसंज्ञा । 'तिस्रः कृष्णा वशा वारुण्यः (तै. सं. 5. 6. 11) एवमादि । त्रैंशिकस्येति किम् ? 'कृष्णा भवति वारुणा ह्येषा' (तै सं 2 1 9)। द्वितीयस्येति किम् ? 'शका भौमी' (तै· सं· 5. 5 18) 'अदितिँशीर्ष्णा निरृतिम्' (तै. सं. 5. 7. 13) । दशिनीति किम् ? 'यासां राजा वरुणः' (तै· सं· 5 6. 1) । मयुरादयः । अत्राप्युत्तरार्धं त्रैंशिकस्येत्यनुवर्तते । त्रैंशिकस्य 'मयुः प्राजापत्यः' (तै. सं. 5. 5. 12) इत्यादय. त्रयोऽनुवाकाः विसर्जनीयान्ता भवन्ति । त्रय इति कथं ज्ञायते ? उत्तरत्र 'ते दिव्या दक्षमातमन्म्याम्' (प. प्र 39) इति अत्रस्थस्य दिव्या इत्येकस्य पदस्योपादानात् बहुवचनस्य त्रित्वमात्रेणैव सार्थकत्वाच्च, 'गर्भाष्टमे ब्राह्मणमुपनयीत' (आश्व· गृ· सू. 1 19) इत्यादिषु तथा दर्शनात् । किञ्च पूर्वत्र दशिन्य इति वक्तव्ये दशिनीत्ये'वचनग्रहणमेतज्ज्ञापयति- यत्र बहूनामुपादानं विवक्षितं तत्रैकवचनं प्रयुज्यते, यत्र त्रिमात्रत्वं विवक्षितं तत्र बहुवचनमिति । एतत्प्रयोजनमुत्तरत्रापि द्रष्टव्यम् । उदाहरणानि । 'पौष्णा वाचे' (तै· स 5. 5 12, 'वायव्या दिग्भ्यः' (तै सं. 5. 5. 3) 'ते मैत्रा मन्यवे' (तै. सं. 5. 5. 14 । त्रित्वेन किम् ? 'कालका दार्वाघाटः' (तै सं· 5.5.15) । अत्रेति किम् ? 'तस्माद्वायव्या यदिमे' (तै. सं· 3. 4. 3) । 23 ॥

हिरण्यासितसंवत्सरीणा एता उ यानृचः[24] ।
नक्षत्राख्या न चित्रार्द्रश्रोणा[25] लोका उदात्तवत्[26] ॥ 24 ॥

---

v. 7. 1-10 तृतीयदशिन्यः v. 7. 11 -26 (16 Anuvākas)
Total - 30 Anuvākas

24 *SL* I 21 'यानासितवर्णाः संवत्सरीणा एता उ हिरण्यवर्णा एतासु ।'

25 *SL* I 22 'कृत्तिका....'

त्रंशिकस्य 'हिरण्यवर्णाः' (तै. सं. 7. 5. 1) 'असितवर्णाः' (तै सं 3. 1. 11)। 'संवत्सरीणा मरुतः' (तै. सं. 4. 3 13) 'एता उ वः' (तै सं. 5 1. 11) 'यानावह उशतः' (तै. सं. 1. 4. 44) इत्येता ऋचो विसर्जनीयान्ता भवन्ति। 'पावका यासु' (तै. सं. 5. 7. 1) 'असितवर्णा हरयः सुपर्णा मिहः' (तै. सं. 3. 1. 11) 'सान्तपना मदिरा मादयिष्णवः' (तै. सं 4. 3. 13) 'एता उ वस्सुभगा विश्वरूपा विपक्षोभिः' (तै. सं. 5. 1. 11) 'वहमाना भरमाणा हवींषि' (तै सं. 1. 4 44)। त्रैशिकस्य हिरण्येति किम्? 'हिरण्यपाणिमूतये' (तै. सं. 1. 4. 25)। 'हिरण्यगर्भः समवर्तत' (तै. सं 4. 1. 8) इत्यादिषु मा भूदिति। ऋच इति किम्? 'यासां राजा वरुणः' (तै. सं 5. 7. 1)। एवमन्यास्वपि द्रष्टव्यम्। नक्षत्राख्या नक्षत्रवाचकं पदं विसर्जनीयान्तं भवति चित्रादीनि वर्जयित्वा। अत्र कृत्तिकादिभरण्यन्ता नक्षत्रविशेषा विवक्षिताः। कथं न चित्रादीनि? चित्रादीनां नक्षत्रविशेषाणामेव निषेधदर्शनात् निसेधस्य च विध्यपेक्षत्वात्। तस्मात् प्रयोजनं तु 'ऋक्षा वा एमालोपका' (तैं. सं. 2. 6. 5) इत्यत्र पर्यायप्रतिरूपकम् ऋक्षा इति पदं विसर्जनीयान्तं न भवति। एवमन्यत्रापि द्रष्टव्यम्। उदाहरणानि। 'कृत्तिका नक्षत्रम्' (तै. सं. 4. 4. 10) 'आश्रेषा नक्षत्रम्' (तै. सं 4. 4. 10) इत्यादि। न चित्रार्द्राश्रोणेति किम्? 'चित्रा नक्षत्रमिन्द्रः' (तै. सं. 4. 4. 10) 'आर्द्रा नक्षत्रं रुद्रः' (तै. सं. 4. 4. 10) 'श्रोणा नक्षत्रं विष्णुः' (तै सं. 4. 4. 10)। लोका इत्येतत्पदं सोदात्तं विसर्जनीयान्तं भवति। 'वै देवलोका द्वादश' (तै. सं. 5. 1. 10) 'इमे लोका विधृताः' (तै. सं. 5. 7. 6)। सोदात्तमिति किम्? 'पश्चाल्लोका वै' (तै. सं. 6. 3. 8)॥

अथातिरिक्तादीन्युच्यन्ते—

[रिक्ताग्रैकस्थयामोता अक्ता रेफेऽनपादिताः।][27]

---

2 3, 'न त्वार्द्रा .... चित्रा श्रोणा....'

26 c.f *SL* I 63, 64 '....लोकाः न पश्यात्पूर्वः।'

27 No gap in Ms. Added by the editor.

'ऊनातिरिक्ता मिथुना:'[28] (तै. सं. 5. 1. 8) 'चन्द्राग्रा धियं धियम्'[29] (तै. सं. 1. 1. 14) 'द्व्यनीका वा एता वा रात्रय:'[30] (तै. सं. 7. 4. ०) 'सूपस्था देवी वनस्पति:'[31] (तै. सं 1. ८. 2) 'पुरस्तादुपयाया यजुषा गृह्यन्ते'[32] (तै. सं. 6. 5. ।0) 'नस्योता नेनीयते'[33] (तै. सं. 2. 1. 1)। अक्ता इत्येतत्पदं रेफे परतो विसर्जनीयान्तं भवति। 'अनभ्यक्ता रेफन्ति'[34] (तै. सं 7. 1. 1.)। रेफ इति किम्? 'मधुना समक्ता विश्वैर्देवै:' (तै. सं 4. 2. 6)। अनप इत्यस्मात्परम् इता इति पदं विसर्जनीयान्तं भवति। 'अनपेता मधो:'[35] (तै. सं. 6. 7. 7)। अनपादिति किम्? 'दुरिता यानि' (तै. सं. 1. 8. 5) ॥ 24 ॥

आतृण्णा दजयो:[36] कण्ठ[37]ग्रीव[38]क्ष[39]रर्य[40]गत[41]ग्रहा:[42]।
कृता नीचं[43] गृहीताश्व[44] ग्रा[45]ह्यचेत[46]वृत[47]प्रजा:[48] ॥ 25 ॥

---

28 *SL* I. 3 '....अतिरिक्ता....'
29 *SL* I 3 '....अग्रा...'
30 *SL* I 3 '....अनीका....'
31 *SL* I 14 '....उपस्था....'
32 *SL* I 14 '...उपयामा....'
33 *SL* I 20 '....ओता:....'
34 *SL* I 3 '....अनभ्यक्ता:....'
35 *SL* I 12 '....अनपेता:....'
36 *SL* I 11 '....आतृण्णा दजपर:....'
37 *SL* I 27 '....कण्ठा:....'
38 *SL* I 28 '....ग्रीवा:....'
39 *SL* I 27 '....क्षा: ....'
40 *SL* I 28 '....रया:....'
41 *SL* I 28 '....गता:....'

आतृण्णा इति पदं दकारे जकारे च परतो विसर्जनीयान्तं भवति। 'स्वयमातृण्णा दिक्षूपदधाति' (तै. सं 5. 5. 8) 'स्वयमा [तृ]ण्णा ज्योतिर्हिरण्यम्' (तै. सं. 5. 7. 6)। दजयोरिति किम्? स्वयमातृण्णा भवति' (तै. सं. 5. 1. 8)। 'नीलग्रीवा शितिकण्ठा दिवम्' (तै. सं. 4. 5. 11) 'नीलग्रीवा विलोहिताः' (तै. सं. 4. 5 11) 'इन्द्र ग्रमुक्षा मरुतः' (तै. सं 4. 6. 8) 'देवताः सुवर्ग्या या उत्तमाः' (तै. सं. 5. 4. 3) 'अयोग्रघीरन्तगता दहति' (तै. सं 1. 5. 9) 'यद्दतुग्रहा गृह्यन्ते' (तै. सं. 6. 5. 3)। कृता इति पदमनुदात्तं चेद् विसर्जनीयान्तं भवति। 'तस्मात्स्वाहाकृता हेमन्' (तै. सं. 2. 6. 1)। नीचमिति किम्? 'स्वयङ्कृता वेदिर्भवति' (त. सं. 1. 8. 9)। चकारो नीचत्वमाकर्षति। गृहीता इति पदं नीचं चेद् विसर्जनीयान्तं भवति। 'वरुणगृहीता वै स्थावराः' (तै. सं. 6. 4. 2)। अन्वादेशेन किम्? यत्कर्णगृहीता वार्त्रघ्नी स्यात्' (तै. सं 6. 1. 7) 'यदतिग्राह्या गृह्यन्ते' (तै. सं 6. 6 8) 'प्रचेता रुद्रः' (तै. सं. 6. 2. 7) 'मनुष्या विधृता ब्रह्मवादिनः' (तै सं 1. 6 2) 'सुप्रजा वीरवन्तः' (तै. सं. 1. 8. 22)॥ 25॥

चक्ष[49]जोष[50]च्छन्द[51]जात[52]तप्यमान[53]नभ[54]प्रथाः[55]।
मव्रता[56] जा न पुत्राख्या[57] तरा नाके[58] मतस्तमाः[59]॥ 26॥

---

42 *SL* I 28 '... ग्रहाः....'
43 c.f *SL* I 27 '....स्वाहाकृता....'
44 c.f *SL* I 28 '....वरुणगृहीता....'
45 *SL* I 28 '....ग्राह्याः....'
46 *SL* I 30 '....चेताः....'
47 *SL* I 43 '....विधृताः....'
48 *SL* I 48 '....प्रजाः....'
49 *SL* I 30 '....चक्षाः....'
50 *SL* I 32 '....जोषाः....'

'तन्ते दुश्चक्षा मावख्यत्' (तै. सं. 3. 2. 10) 'सजोषा देवैरवरैः' (तै. सं 1. 4. 3) 'यदतिच्छन्दा यदतिच्छन्दसम्' (तै. सं. 5. 3. 8. 'वैश्वदेवा वै सजाता विश्वान्' (तै. सं. 2. 1. 6) 'अनुतप्यमाना मधव्यो' (तै. सं. 3 2. 8) 'ऊर्ध्वनभा ह स्मा वै' (तै. सं. 6. 3. 9) 'सप्रथा नमस्पथे' (तै. सं 4. 7. 13) 'सव्रता येऽग्नयः' (तै. सं. 4. 4 11)। सेति किम्? 'अग्नेरनुव्रता भूत्वा' (तै. सं. 1. 1. 10) 'एकव्रता देवा इत्येक-व्रता'[60] (तै सं. 6. 2. 5) इति पदं 'एकव्रता आत्मना यजमानस्य' (तै. सं. 6. 2. 5) इति संहितयैव व्यक्तमिति अत्र न गृह्यते। जा इत्येतत्पदं पुत्राख्यां वर्जयित्वा विसर्जनीयान्तं भवति। 'सहोजा जैत्रमिन्द्र' (तै. सं 4. 6. 4) 'अब्जा गोजाः' (तै. सं. 1. 8. 15) 'प्रजाभ्यस्त्वा प्रजा जिन्वः' (तै सं 4. 4. 1) इत्यादीनि। न पुत्राख्येति किम्? 'प्रजा वा उत्तरा देवयज्या' (तै. सं. 2. 6. 7) 'प्रजा हि वा एतस्मिन्' (तै. सं. 2. 1. 8) इत्यादीनि। कथं प्रजाशब्दस्य पुत्रवाचकत्वम्? 'पिता वै प्रयाजाः प्रजानूयाजा यत्प्रयाजानिष्ट्वा हवींष्यभिघारयति पितैव तत्पुत्रेण साधारणं कुरुते' (तै. सं. 2. 6. 1) 'त्रिभिरृणवा जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया

---

51 *SL* I 31 '.... छन्दाः....'

52 *SL* I 32 '....जाताः....'

53 *SL* I 35 '....अनुतप्यमानाः ....'

54 *SL* I 47 '....नभाः....'

55 *SL* I 48 '....प्रथाः....'

56 *SL* I 65 '....सव्रताः....'

57 c.f. *SL* I 32 '....जाः।'

33 नैतस्मादापञ्चमपरपदाद्यत्र पशवोऽस्ति।

34 मामास्याद् भवति हि जायते यन्मे ज्योतिःपरश्च।'

58 c. f. *SL* I 36 'तरा नाकसत्परः।'

59 *SL* I 35 '....मधुमत्तमाः ....'

60 *SL* I 65 '....एकव्रताः'

पितृभ्यः । एष वा अनृणो यदि पुत्री यज्वा' (तै. सं. 6. 3. 10) 'अत्रिरददादौर्वाय प्रजां पुत्रकामाय' (तै. सं. 7. 1. 8) 'वसिष्ठो हतपुत्रोऽकामयत विन्देय प्रजाम्' (तै. सं 7. 4. 7) इत्यादिषु प्रजाशब्दस्य पुत्रशब्दपर्यायत्वेन एकवचनत्वदर्शनात् । अत्र विभागार्थं पुरातनं किमपि लक्षणं लिख्यते- 'जाः । नैतस्मात्पुरा पञ्चमपदाद् यत्र पशवोऽस्ति । मामा स्याद् भवति [हि] जायते यन्मे ज्योतिः परश्च' (सप्तलक्षणे 1. 32–34)[61] इति । अस्यार्थः- जा इत्येतत्पदं सर्वत्र विसर्जनीयान्तं भवति यत्र पञ्चमपदात्प्राक् पशव इत्येतत्पदं भवति, येभ्यः पराणि मामादीनि निमित्तानि च भवन्ति तानि वर्जयित्वा । निषेधस्योदाहरणानि । 'प्रजा वा उत्तरा देवयज्या पशवः' (तै. सं. 2. 6. 7) 'प्रजा मामा हासीत्' (तै. सं 5. 7. 1) पापीयस्यास्यात्मनः प्रजा स्यात्' (तै. सं. 5. 6. 8) 'पापीयसी प्रजा भवति' (तै. सं. 5. 6. 8) 'प्रजा ह्यात्मनोऽन्तरतरा' (तै. सं 6. 2. 2) 'अग्न्यस्य प्रजा जायते' (तै. सं. 6 4. 10) 'इयं प्रजा यन्मनुष्याः' (तै. सं. 6. 5. 6) 'आ प्रजा म आमा' (तै. सं 6. 3. 4) 'प्रजा ज्योतिरिममेव' (तै. सं 7. 5. 7) । एतत्सर्वं जा न पुत्राख्येति सङ्क्षेपेणोक्तम् । तरा इत्येतत्पदं नाके परतः विसर्जनीयान्तं भवति । 'उत्तरा नाकसद्भ्यः' (तै. सं. 7.3. 7) । नाक इति किम् ? 'उत्तरा देवयज्या' (तै सं 2. 6. 7) । मदित्येतस्मात्परं तमा इति पदं विसर्जनीयान्तं भवति । 'मधुमत्तमा मन्द्राः' (तै. सं. 1. 1. 3) । मत इति किम् ? 'उत्तमा नीयते' (तै. सं. 7. 1. 7) ॥ 26 ॥

---

61 'नैतस्मादापञ्चमपरपदाद्' for '.. पुरा ....' Vid Se L I 33 Quoted under F. N. 57

भागा नाज्याद्[62] दिशा न प्राद्[63] द्वेर्देवत्या[64] दुघा न सोः[65] ।
दक्ष[66]दूत[67]धाय[68]धाव[69]दात्र[70]नेत्र[71]ददान[72]पाः[73] ।। 27 ।।

भागा इत्येतत्पदं विसर्जनीयान्तं भवति आज्य इत्यस्मात्परं वर्जयित्वा । 'येऽद्रिविभागा येऽन्तरिक्षभागा ये' (तै. सं 2 4 8) । नाज्यादिति किम् ? 'सरस्वत्याज्यभागा स्यात्' (तै. सं. 2. 2. 9) । दिशा इति पदं विसर्जनीयान्तं भवति प्र इत्यस्मात्परं वर्जयित्वा । 'चतस्रो ऽवान्तरदिशा दिग्भ्यः' (तै. सं. 2. 8. 9) । न प्रादिति किम् ? 'ज्योतिः प्रदिशा दिशन्ता' (तै. सं. 5. 1. 11) । द्वि इत्येतस्मात्परं देवत्या इति पदं विसर्जनीयान्तं भवति । 'एकपात्रा द्विदेवत्या गृह्यन्ते' (तै. सं. 6. 4 9) । द्विरिति किम् ? 'सा वा एषा सर्वदवत्या यदजा' (तै. सं. 3. 4. 3) । दुघा इत्येतत्पदं विसर्जनीयान्तं भवति सु इत्येतस्मात्परं वर्जयित्वा । 'कामदुघा यद्धारियोजनीः' (तै. सं. 6. 2. 9) । न सोरिति किम् ? 'सुदुघा नः पयस्वती' (तै. सं. 4. 4. 12) । द क्षादीनि पदानि विसर्जनीयान्तानि भवन्ति । 'सुदक्षा दक्षपितारः' (तै. सं. 1. 2. 3)

---

62 *SL* I 56 'भागाः अनाज्यपूर्वः ।'
63 c. f. *SL* I 39 '....अवान्तरदिशाः .. '
64 c. f. *SL* I 39 ' द्विदेवत्याः....'
65 c. f. *SL* I 39 '....कामदुघाः....'
66 *SL* I 39 '....दक्षाः....'
67 *SL* I 39 '....दूताः ..'
68 *SL* I 43 '....धायाः....'
69 *SL* I 43 '... धावाः....'
70 *SL* I 39 '....दात्राः ...'
71 *SL* I 47 '....नेत्राः....'
72 *SL* I 39 '....ददानाः....'
73 *SL* I 48 '.. पाः....'

'देवदूता वा एते' ((तै· सं 1· 7. 3) 'अदितिरसि विश्वधाया विश्वस्य' (तै. सं. 4. 2. 9) 'यदाधावा मान्दासु' (तै सं· 3. 3. 4) 'अस्मद्द्रात्रा देवत्रा' (तै. सं. 1· 4. 43) 'अग्निनेत्रा दक्षिणसदः' (तै· सं. 1. 8. 7) 'आददाना विमथ्नानाः' (तै· सं· 3. 5 4) 'सोमपा बाहुशर्धी (तै. सं. 4. 6. 4) ।। 27 ।।

धुवान[74]धृष्य[75]पात्र[76]प्रायण[77]पत्य[78]मन[79]व्यच्चाः[80] ।
भक्ष[81]भार[82]मित्र[83]मेध[84]प्रजातपु[85]र[86]भक्त[87]साः[88] ।। 28 ।।

'सन्धुवाना वाताः' (तै· सं· 4 4 12) 'अनाधृष्या यथाऽसथ' (तै. सं. 4. 6. 4) 'एकपात्रा द्विदेवत्याः' (तै· सं· 6. 4 9) 'अग्निष्टोमप्रायणा यज्ञाः' (तै सं 7. 2 9) 'प्राजापत्या वै पशवः'

---

74 *SL* I 43 '....धुवानाः....'
75 *SL* I 43 '....धृष्याः....'
76 *SL* I 48 '....पात्राः....'
77 *SL* I 48 '...प्रायणाः....'
78 *SL* I 48 '....पत्याः....'
79 *SL* I 57 '....मनाः ..'
80 *SL* 1 65 '....व्यचाः....'
81 *SL* I 55 '....भक्षाः....'
82 *SL* I 55 '....भाराः....'
83 *SL* I 57 '....मित्राः ...
84 *SL* I 57 '....मेधाः....'
85 *SL* I 48 '... प्रजाताः....'
86 *SL* I 48 '....पुराः....'
87 *SL* I 55 '....भक्ताः....'
88 *SL* I 68 '....सहस्रसाः....'

(तै. सं. 2. 3. 2) 'एषा वै सुमना नामेष्टिः' (तै. सं. 2. 5. 5) 'उरुव्यचा नो महिषः' (तै. सं. 4. 7. 14) 'आयुष्मन्तः सहभक्षा स्याम' (तै. सं. 3. 1. 9) 'सम्भारा न यजुः' (तै. सं. 1. 5. 2) सुमित्रा न आपः' (तै सं. 1. 4. 45) 'सुमेधा मर्तेषु' (तै. सं. 4. 2. 2) 'ऋतप्रजाता भगे' (तै. सं. 3. 1. 8) 'देवपुरा देवपुरा एव' (तै. सं. 5. 3. 9) 'तस्माद्विभक्ता जायन्ते' (तै. सं 6. 1. 9) 'शतसा वाज्यर्वा' (तै. सं. 1. 5. 11) 'सहस्रसा मेधसाता' (तै. सं 1. 7. 8) ॥ 28 ॥

मनस्यमान[89]मथ्नान[90]मुञ्चमान[91]मुख[92]प्रियाः[93] ।
निष्परिभ्यामेव मिता[94] यश[95]याज[96]रथ[97]श्रवाः[98] ॥ 29 ॥

'सुमनस्यमाना वियन्तु' (तै. सं 1. 5. 10) 'आददाना विमथ्नाना यो ददाति' (तै. सं. ?. 5.4) 'प्रमुञ्चमाना भुवनस्य' (तै. सं. 3. 1. 4) ब्रह्ममुखा वै प्रजापतिः' (तै. सं. 7. 2. 7) 'यन्मिथो विप्रिया स्मः (तै. सं. 6. 2. 2) । निः परि इत्येताभ्यां परं मिता इति पदं विसर्जनीयान्तं भवति । 'निर्मिता यत्सामिधेन्यः (तै. सं. 2. 5. 7) 'परिमिता वा ऋचः' (तै. सं 7. 3 1) । एताभ्यामिति किम् ?

---

89 *SL* I 57 '....मनस्यमानाः....'
90 *SL* I 57 '....मथ्नानाः....'
91 *SL* I 57 '....मुञ्चमानाः....'
92 *SL* I 57 '....मुखाः....'
93 c. f. *SL* I 51 'प्रिया मा स्मः परः'
94 c.f *SL* I 57 '....निष्परिमिताः ।
95 *SL* I 58 '....यशाः....'
96 *SL* I 58 '... याजाः....'
97 *SL* I 60 '.. स्रथाः....'
98 *SL* I 67 '....श्रवाः....'

'सम्मिता यदग्निष्ठाम्' (तै· सं· 6. 3. 4) । एवेति किम् ? अपरिमिता इत्यत्र मा भूदिति । 'सहयशा यशस्वती' (तै. सं 4. 4. 12) 'प्रजाऽनूयाजा यत्प्रयाजान्' (तै सं 2. 6 1)' 'सुरथा मर्जयेम' (तै सं· 1. 2. 14) । 'सुश्रवा वै नाम' (तै सं. 3. 5. 7) ॥ 29 ॥

विदान[99] लिम्प[100]यतन[101]रेत[102]वेद[103]रव[104]स्थिता:[105] ।
रूपा [तु] न वशे[106] वर्च[107]वल्श[108]वेश[109]वय[110]स्तुता:[111]
॥ 30 ॥

'सर्वे संविदाना नाकस्य' (तै. सं. 4. 4. 2) 'निलिम्पा नाम स्थ' (तै· सं· 5. 5.8) 'अनायतना हि तस्मात् (तै. सं. 7. 1. 5) 'सुरेता रेतो दधाना' (तै. सं. 1. 2. 5) 'विश्ववेदा दिप्सन्त:' (तै. सं. 1. 2. 14) 'उपरवा ग्रावाण:' (तै. सं. 4. 7 8) 'प्रतिष्ठिता य एवं वेद' (तै. सं. 7. 1. 1) । रूपा इत्येतपदं विसर्जनीयान्तं भवति

---

99 *SL* I 65 '....विदाना: '
100 *SL* I 63 '....लिम्पा:....'
101 *SL* I 58 '....यतना:....'
102 *SL* I 60 '...रेता:...'
103 *SL* I 65 '....वेदा:....'
104 *SL* I 60 '....रवा:....'
105 *SL* I 68 '....स्थिता:....'
106 *SL* I 60, 61 '....रूपा: । न वशापर: ।'
107 *SL* I 65 '....वर्चा:....'
108 *SL* I 65 '...वल्शा:....'
109 *SL* I 65 '....वेशा:....'
110 *SL* I 65 '...वया:....'
111 *SL* I 68 '....स्तुता:....'

वश इत्येतत्परं वर्जयित्वा। 'नानारूपा मातुः' (तै. सं. 4. 3. 11)। न वश इति किम्? 'सा द्विरूपा वशा भवत्' (तै. सं 2. 1. 7)। 'सुवर्चा वर्चसा' (त. सं 3. 2. 3)। 'सहस्रवल्शा अष्टात्रिंशच्च' (तै. सं 1. 1. 2) इत्यत्र संहितयैव व्यक्तम्। 'सहस्रवल्शा वि वयं रुहेमेत्याह' (तै. सं. 6. 2. 2) इत्यत्र ब्राह्मणांशस्य मन्त्रेणैव व्यक्तिर्भविष्यति। अत्र वल्शा इति पदं किमर्थं गृह्यते? उच्यते- अस्य मन्त्रस्य इदं न ब्राह्मणं भवति। अयं मन्त्रो दर्शपूर्णमासविषयः। इदं ब्राह्मणं पशुविषयम्। तस्मादनयोः परस्परं मन्त्रब्राह्मणत्वं न घटते। एवमन्यत्रापि। 'प्रतिवेशा रिषाम' (तै. सं. 4. 1. 10) 'बृहद्वया विश्वजित्' (तै. सं. 1. 5. 10) 'ते सँस्तुता विराजम्' (तै सं 7. 4. 11) ॥ 30 ॥

कवेः शस्ता[112] नित सत्ता[113] हुता मे[114] हायहायनाः[115]।
शुष्क[116]सत्य[117]सोमपीथ[118]स्परणा[119] अथ देवता ॥ 31 ॥

कवि इत्येतस्मात्परं शस्ता इति पदं विसर्जनीयान्तं भवति। 'कविशस्ता बृहन्तु' (तै. सं. 1. 6. 12)। कवेरिति किम्? 'विशस्ता द्वा यन्तारा' (तै. सं 4. 6. 9)। नि इत्येतस्मात्परं सत्ता इति पदं विसर्जनीयान्तं भवति। 'राजस्या निषत्ता ये वा' (तै. सं. 2. 6. 12)। नित इति किम्? 'उपसत्ता वर्धताम्' (तै. सं. 4. 1. 7)। हूता इति

---

112 *SL* I 67 '....कविशस्ताः....'
113 *SL* I 67 '....निषत्ताः....'
114 *SL* I 76 'हूताः मकारपरः।'
115 *SL* I 74 '....हायाः हायनाः....'
116 *SL* I 67 '... शुष्काः ...'
117 *SL* I 68 '....त्रिषत्याः....'
118 *SL* I 68 '....सोमपीथाः....'
119 *SL* I 67 '....स्परणाः....'

पदं मकारे परतो विसर्जनीयान्तं भवति। 'उपहूता मनुष्याः' (तै सं. 2. 6. 7)। म इति किम् ? 'उपहूता धेनुः' (तै. सं. 2. 6. 7) 'मनसा यद्विहाया धाता' (तै सं 4. 6. 2) 'एकहायना मनुष्याः' (तै. सं. 6. 1. 6) 'लोका अपशुष्का विट्' (तै. सं. 2. 1. 4) 'त्रिषत्या हि देवाः' (तै. सं. 6. 3. 10) 'एतत्सोमपीथा ह्येतर्हि' (तै. सं. 7. 5. 6) 'आत्मस्परणा वा एते' (तै. सं. 6. 5. 5)। 'सत्यौजा ब्रह्मन्' (तै. सं 1. 8. 16) इत्यत्र ओजा इति पदं 'सत्यौजाः चत्वारिंशच्च' (तै सं 1. 8. 16) इति संहितयैव व्यक्तम् ।। 'पञ्चजनीना येषाम्' (तै. सं. 1. 7. 12) 'शततेजा वायुः' (तै. सं 1. 1. 9) 'अभिशस्त्या वीतिहोत्रम्' (तै. सं. 1. 1. 11) 'चन्द्रदक्षिणा यज्ञस्य' (तै. सं. 1. 4. 43) 'शतं हिमा द्युमन्तः' (तै. सं. 1. 5. 5) एनानि ब्राह्मणांशेन व्यक्तानि । तस्मादत्र न गृह्यन्ते ।। अथेत्ययमधिकारः । देवता इत्यादीनि अखण्डपदान्युच्यन्ते । 31 ।।

न दिव्यनामक्षेपिष्ठैतस्येभ्यो[120]ऽप्रा[121]घ्निया[122]पृणाः[123] ।
क्लृप्ता[124]हृणीयमा[125]नाध[126]कुमार[127]क्षुल्ल[128]कावकाः[129]।।32।।

देवता इति पदं विसर्जनीयान्तं भवति दिव्यनामादिभ्यः परं वर्जयित्वा । 'अग्निः सर्वा देवता विष्णुः' (तै. सं. 2. 2. 9) इत्यादि ।

---

120 c. f. *SL* I 39, 40 '....देवताः । न क्षेपिष्ठैतस्यपूर्वः ।'
121 *SL* I 3 '....अप्राः....'
122 *SL* I 3 '....अघ्नियाः....'
123 *SL* I 3 '....अपृणाः....'
124 *SL* I 27 '....क्लृप्ताः....'
125 *SL* I 3 '....अहृणीयमानाः....'
126 *SL* I 3 '....अधाः....'
127 *SL* I, 27 '....कुमाराः....'
128 *SL* I 27 '....क्षुल्लकाः....'
129 *SL* I 3 '....अवकाः....'

न दिव्यनामक्षेपिस्ठेतस्येभ्य: इति किम् ? 'प्रजापतिर्देवता मृगशीर्षम्' (तै सं 4 4. 10) इत्यादि। क्षेपिष्ठा देवना वायुम्' (तै सं 2. 1. 1) 'एतस्य देवता य आनुजावर:' (तै. सं 2. 3 4) 'आप्रा द्यावापृथिवी' (तै सं. 1. 4. 43) 'अघ्निया देवभागम्' (तै. सं. 1. 1. 1)। 'आ रोदसी अपृणा जायमान: (तै सं 1 5 11) 'ऊर्ध्वा कल्प्ता स्तोमा भवन्ति' (तै· सं 7. 4. 3) 'अहृणीयमाना विश्वेदेवा:' (तै · सं· 2. 1. 11) 'अधामेति (तै सं 2 4 2) 'कुमारा विशिखा इव' (तै · सं 4 6 1) 'ये क्षुल्लका या स्त्रिय' (तै · सं. 1 3 9) 'शरोऽवका वेतसशाखया च' (तै सं. 5 4 4)।। 32 ।।

कल्पमाना[130]जनिष्ठा[131]वोचथ[132]क्रव्य[133]गृहा[134]गता:[135]।
केशा[136]गृही[137]तगन्ध[138]र्वग्रहीतव्या[139]र्घ[140]चन्द्रमा[141] ।। 33 ।।

'ता अस्य कल्पमाना राष्ट्रम्' (तै सं 3 4 8) 'प्र त्वम–जनिष्ठा वयम्' (तै. सं. 6. 5. 2) 'हन्तावोचथा वराह:' (तै सं 6 2 4) क्रव्या नाम स्थ' (तै सं 5 5 10 'उपरि गृहा वर्ये

---

130 *SL* I 27 '....कल्पनाना ..'
131 *SL* I 3 '....अजनिष्ठा: ...'
132 *SL* I 3 '... अवोचथा:....'
133 *SL* I 27 '... क्रव्या:....'
134 *SL* I 28 '....गृहा: '
135 *SL* I 3 '... अहता:....'
136 *SL* I 27 '... केशा:....'
137 *SL* I 3 '....अगृहीता: ..'
138 *SL* I 28 ' गन्धर्वा: ...'
139 *SL* I 28 '... ग्रहीतव्या:....'
140 *SL* I 3 '....अर्घा: ...'
141 *SL* I 30 '...चन्द्रमा:....'

व:' (तै. सं. 5. 5. 10) 'अजीता अहृता स्याम' (तै॰ सं 5. 7. 2) 'केशा नक्षत्राणि' (तै. सं. 7. 5. 25) 'एते गृहीता द्रोणकलशः (तै. सं. 3. 2. 1) 'गन्धर्वा स्त्रिया' (तै. सं 6. 1. 6) 'सर्वपृष्ठे ग्रहीतव्या यज्ञस्य' (तै॰ सं॰ 6. 6. 8) 'अर्धा वा यावतीर्वा' (त. सं. 7. 5. 2) 'चन्द्रमा देवताः' (तै. सं. 4. 3. 7) ॥ 33 ॥

चन्द्रा[142]जायथ[143]तन्वाना[144]स्मेरा[145]कलृप्त[146]जना[147]न्तमाः[148]।
जायमाना[149]काम[150]जाया[151]निष्टा[152]ध्वर्तव्य[153]जागताः[154]॥34॥

'यश्चाप श्चन्द्रा वृहतीः' (तै. सं. 4. 2. 7) 'अजायथा वृषभ' (तै॰ सं॰ 1. 6. 12) 'पुनस्तन्वाना यन्ति' (तै सं 6. 3.1) 'तमस्मेरा युवतयः' (तै॰ सं. 2. 5. 12) 'अकलृप्ता वा एते' (तै. सं. 3. 4. 8) 'जना यदग्निम्' (तै॰ सं॰ 4. 2. 2) 'नान्तमा वहन्तीः' (तै. सं. 6. 4 2 ) 'जायमाना नानारूपाः' (तै. सं. 4. 3 11) 'अकामा वः' (तै. सं. 3. 2. 8) 'बह्वीर्जाया विन्दते' (त. सं 6. 5. 1) 'अनिष्टा देवताः' (तै. सं. 2. 6. 1) 'अध्वर्तव्या वा इमे' (तै॰ सं. 3. 2. 2) 'जागता वै पशवः' (तै. सं 2. 5. 10) ॥ 34 ॥

---

142 *SL* I 30 '....चन्द्राः....'
143 *SL* I 3 '....अजायथाः....'
144 *SL* I 35 '....तन्वानाः....'
145 *SL* I 3 '.. अस्मेराः....'
146 *SL* I 3 '....अक्लृप्ताः....'
147 *SL* I 32 '....जनाः....'
148 *SL* I 3 '....अन्तमाः....'
149 *SL* I 32 '....जायमानाः....'
150 *SL* I 3 '....अकामाः....'
151 *SL* 1 32 '....जायाः....'

जुषाणा[155]पुष्प[156]जीवा[157]स्य[158]वसव्या[159]मुष्य[160]तस्कर:[161]
ज्ञाता[162]नाग[163]तुषा[164]ज्याया[165]सपत्नाप[166]स्यत[167]ण्डुला:[168]
॥ 35 ॥

'आज्यञ्जुषाणा वियन्तु' (तै. सं 1. 8. 3) 'अपुष्पा याश्च' (तै. सं. 4. 2. 6) 'जीवा ज्योतिरशीमहि' (तै. सं. 7. 5. 7) 'मृगो अस्या दन्त:' (तै. सं. 4. 6. 6) 'देवा वसव्या देवा:' (तै. सं. 2. 4. 10)। मन्त्रेण व्यक्तेऽपि ग्रहणमनिङ्ग्यार्थम्। एवमन्यत्रापि द्रष्टव्यम्। 'यदमुष्या यज्ञियम्' (तै. सं. 5 .2. 3)। अस्या अमुष्या इत्यादीनां प्रसिद्धपदानामिह ग्रहणं कृत्स्नविधिज्ञापनार्थम्। तस्मात् 'पदात्संशयितात्'

---

152 *SL* I 3 '....अनिष्टा:....'
153 *SL* I 3 '....अध्वर्तव्या:....'
154 *SL* I 32 '....जागता:....'
155 *SL* I 32 '....जुषाणा:....'
156 *SL* I 3 '....अपुष्पा:....'
157 *SL* 1 32 '....जीवा:....'
158 *SL* I 3 '....अस्या: ...'
159 SL I 65 '....वसव्या:....'
160 *SL* I 3 '....अमुष्या:....'
161 *SL* I 35 '... तस्करा:....'
162 *SL* I 32 '....ज्ञाता:....'
163 *SL* I 3 '... अनागा:....'
164 *SL* I 35 '....तुषा:....'
165 *SL* I 32 '....ज्याया:....'
166 *SL* I 3 '....असपत्ना:....'
167 *SL* I 3 '....अपस्या:....'
168 *SL* I 35 '....तण्डुला:....'

(प· प्र. 7) इति व्यभिचारिलक्षणगम्यं प [द] मस्तीति नाशङ्कितव्यम् । 'स्तेनासस्तस्करा वने' (तै. सं.4. 1. 10) 'ज्ञाता स्तोमा भवन्ति' (तै. सं. 7. 2. 4) 'अनागा व्येनांसि' (तै. सं. 4. 7. 15) 'यत्तुषा निरृत्यै (तै सं 5. 2. 4) 'ज्याया हेतिम्' (तै सं· 4. 6. 6) 'असपत्ना नामेष्टका:' (तै. सं. 5. . 5) 'वज्रो वा अपस्या वज्रेणैव' (तै. सं. 5. 2. 10) 'अनडुहस्तण्डुला मिथुनात्' (तै. सं. 2. 2. ) ॥ 3 ॥

वदन्तीं यतनाः संभ्योऽन्या[169] आग्नेया[170]द्यद्दे[171]विकाः[172] ।
अमेध्या वाभ्य[173]रिष्टा स्ये[174]ऽजा वृष्णा[175]विष्टके[176]श्वराः[177]
॥ 36 ॥

अन्या इति पदं वदन्तीं यतनाः सम् इन्येतत्परं विसर्जनीयान्तं भवति। 'प्रवदन्तीमन्या वाच' (तै. सं. 2 2 9) 'अनायतना अन्या या:' (तै. सं 3. . 9) समन्या यन्त्युपयन्ति' (तै. सं. 2. 5 12) । एतेभ्य इति किम्? 'अन्या वो अन्यामवतु' (तै सं 4 2 6) । 'तेनाग्नेया यत्त्रिष्टुभः' (तै· सं. 5 5. 1) 'या आद्या य एवं वेद' (तै. सं 6. 4. 10) 'देविका निर्वपेत्' (तै· सं 3 4 9) । अमेध्या इति पदं वै इत्येतस्मिन् परतो विसर्जनीयान्तं भवति । 'अमेध्या वै

---

169 *SL* I 4 'वदन्तीं संयतनाअन्याः ।'
170 *SL* I 6 '....आग्नेयाः ...'
171 *SL* I 6 ' ..आद्याः....'
172 *SL* I 39 '....देविकाः....'
173 c. f. *SL* I 3 'एत्यमेध्याः....'
174 *SL* I 5 'अरिष्टा स्यापरः ।'
175 c. f. *SL* I 3 '....वस्तेनाजाः....'
176 *SL* I 12 '....इष्टकाः....'
177 *SL* I 13 '....ईश्वराः....'

माषाः' (तै. सं 5. 1. 8) । वायि इति किम्? 'अलोमकामेध्या यद्वेदिः (तै. सं. 2. 6. 5) 'त्वगमेध्या यत्' (तै. सं. 6. 1. 1) । अरिष्टा इत्येतत्पदं स्य इत्येतस्मिन् परतो विसर्जनीयान्तं भवति । 'अरिष्टा स्याम' (तै. सं. 5. 7.4) । स्य इति किम्? 'अरिष्टा विश्वान्यङ्गानि' (तै. सं 5. 5. 8) । आजा इति पदं वृष्णि इत्येतस्मिन् परतो विसर्जनीयान्तं भवति । 'बस्तेनाजा वृष्णिया' (तै. सं 7 5. 14)। वृष्णाविति किम्? 'यदजा वशा वायव्याम्' (तै. सं 3 4. 3) 'असपत्ना नामेष्टका यस्य' (तै. सं. 5. 3. 5) 'त एनमीश्वरा हिंसितोः' (तै. सं. 3. 2. 4) ॥ 36 ॥

तृप्ता[178]सीना[179]नशा[180]नोक्थ्या[181]रण्य[182]त्वाष्ट्र[183]पुरूरवाः[184] ।
आदित्या न वपेत[185] स्थादिषा[186] आशा न नस्यु[187]षाः[188]
॥ 37 ॥

'तृप्ता यात पथिभिः' (तै. सं. 1. 7. 8) 'पञ्चभिरासीना मनुष्यलोकम्' (तै. सं. 7. 5. 8) 'सुवरानशाना स्विष्टिम्' (तै. सं 3. 1

---

178 *SL* I 35 '....तृप्ताः....'
179 *SL* I 6 '....आसीनाः....'
180 *SL* I 6 '....आनशानाः....'
181 *SL* I 14 '....उक्थ्याः....'
182 *SL* I 6 '....आरण्याः....'
183 *SL* I 35 '....त्वाष्ट्राः....'
184 *SL* I 48 '....पुरूरवाः....'
185 *SL* I 7, 8 'आदित्याः । न वपेत्पूर्वः ।'
186 *SL* I 12 'स्थेषाः....'
187 *SL* I 9, 10 'आशाः । न नःपरः ।'
188 *SL* I 14 '....उषाः ।'

9। 'प्रधीतावुक्थ्या मध्ये (तै. सं. 7. 4. 11) 'उतेवारण्या यच्छ०करय:' (तै. सं. 5. 4. 12) त्वाष्ट्रा हि देवतया' (तै. सं. ०. 3. 11) 'पुरूरवा घृतेन' (तै. सं 1. 3. 7)। आदित्या इति पदं विसर्जनीयान्तं भवति वपेदित्यस्मात्परं वर्जयित्वा। 'आदित्या वा एतं भूत्यै' (तै. सं. 2 3 1) निर्वपेदादित्या वै' (तै. सं. 1. 3. 1) इषा इति पदं स्थ इत्यस्मात्पर विसर्जनीयान्तं भवति। 'संस्राव भागा स्थेषा बृहन्तः' (तै. सं. 1 1 13)। स्थादिति किम्? समिषा मदेम (तै. सं. 1. 2. 3)। आशा इति पदं विसर्जनीयान्तं भवति नः परं वर्जयित्वा। 'विश्वा आशा दीद्यान'(तै. सं. 4. 6. 5) 'रन्तिराशा नो अस्तु (तै सं. 4. 4. 12) 'उषा वा अश्वस्य' (तै. सं. 7. 5. 25) ॥ 37 ॥

दुर्य[189]रेय[190]क्षमाणा[191]स्तानोवसाभ्यामिमा मयि[192]।
दोहे[193]च्छमान[194]दन्तो[195]षो[196]स्त्रियो[197]खाय[198]र्ध्य[199]मुष्कराः[200]
॥ 38 ॥

---

189 *SL* I 39 '....दुर्याः....'
190 *SL* I 12 '....इराः....'
191 *SL* I 12 '....इयक्षमाणाः....'
192 c. f. *SL* I 12 '...इमाः मे...जोषसेमाः....ता इमाः।'
193 *SL* I 39 '....दोहाः....'
194 *SL* I 12 '....इच्छमानाः....'
195 *SL* I 39 '.. दन्ताः....'
196 *SL* I 15 '....ऊषाः....'
197 *SL* I 14 '...उस्त्रियाः....'
198 *SL* I 14 '....उखायाः....'
199 *SL* I 16 '....ऋध्याः....'
200 *SL* I 57 '....मुष्कराः....'

'हॅंहन्तान्दुर्या द्यावापृथिव्योः' (तै. सं. 1. 1. 4) 'स्योना माऽऽविशतेरा मदः' (तै. सं. 1. 5. 6) 'इयक्षमाणा भृगुभिः' (तै. सं. 4. 6. 5) ता इमा यास्तूपराः' (तै. सं. 7. 5. 2) 'सजोषसेसा वर्धन्तु' (तै. सं. 4 7. 1) 'इमा मे अग्न इष्टकाः' (तै. सं. 4. 4. 11)। एवंपूर्वमेवंपरमिति [किम्] ? 'य इमा विश्वा' (तै. सं. 4. 6. 2)। 'दोहा गां पञ्चनाम्नीम्' (तै. सं. 4. 3 11) 'इच्छमाना व्रजम्' (तै. सं. 4. 2. 2) 'ग्रावाणो दन्ता मुखम्' (तै. सं 6 2. 11) 'यदूग द्यावापृथिवी' (तै. सं. 5. 2. 3) 'उस्त्रिया हव्यसूदः' (तै. सं. 2. 3 4) 'उखाया या पात्राणि' (तै. सं. 4. 6. 9) 'यज्ञमुखादृध्या योऽग्नेः' (तै सं. 5. 1. 1) 'ये मुष्करा यदैन्द्राः (तै. सं. 5. 5. 1) ॥ 38 ॥

ह्यृता[201] ऐलबृद[202]र्तव्य[20] दन्दशू[204]कैन्द्र[205]धिष्णियाः[206]।
ते दिव्या[207] दक्षमात्मन्म्यान्दधाना[208] मातरं प्रियाः [210] ॥ 39 ॥

ऋता इति पदं हि इत्येतस्मात्परं विसर्जनीयान्तं भवति। 'शुचा (ह्यृता लोमत' (तै. सं. 5. 1 4)। हीति किम्? 'ऋता यजासि' (तै. सं. 4 3 13) ऐऌबृदा यग्युत्रः' (तै. सं. 4. 5. 11) 'यदृतव्याः'

---

201 *SL* I 16 '....ह्यृताः....'
202 *SL* I 19 '....ऐतबृदाः....'
203 *SL* I 16 '....ऋतव्याः....'
204 *SL* I 39 :....दन्दशूकाः....'
205 *SL* I 19 '....ऐन्द्राः....'
206 *SL* I 43 '....धिष्णियाः....'
207 c. f. *SL* I 39 '....अक्षासस्ते दिव्याः....'
208 *SL* I 39 'दक्षमात्मन्दधानाः
209 c. f. *SL* I 51 'प्रियाः मा स्मः पर'।

(तै. सं. 5. 3. 11) 'अवेष्टा दन्दशूका निरस्तम्' (तै. सं. 1. 8. 14) 'ऐन्द्रा वै पशवः' (तै. सं. 1. 1. 7) 'एते यद्धिष्णिया यदध्वर्युः' (तै. सं 6. 3. 1)। दिव्या इति पदं ते इत्यस्मात् परं विसर्जनीयान्तं भवति। 'ते दिव्या द्यावापृथिव्या' (तै. सं. 5. 5. 10)। ते इति किम्? 'या दिव्या वृष्टिः' (तै. सं. 1. 4. 22)। दधाना इति पदं दक्षम् आत्मन् इत्येताभ्यां परं विसर्जनीयान्तं भवति। 'दक्षन्दधाना जनयन्तीः' (तै सं 4. 1. 8) 'आत्मन्दधाना वाणः' (तै. सं 7. 5. 9)। एताभ्यां परमिति किम्? 'रेतो दधाना वीरं विदेय' (तै. सं 1. 2. 5)। प्रिया इति पदं मातरमित्यस्मात्परं विसर्जनीयान्तं भवति। 'मातरं प्रिया मा नः' (तै. सं. 4. 5. 10)। मातरमिति किम्? 'प्रिया वो नाम' (तै. सं. 2. 1. 11) ॥ 39 ॥

ता न सर्वावृणेस्योग्रापरीवस्थहृवीमनः[211]।

ता इति पदं विसर्जनीयान्तं भवति सर्वादिभ्यः परं वर्जयित्वा। 'ता वै ब्रह्मीत्यब्रुवन्' (तै. सं. 2. 4. 2)। न सर्वादिभ्य इति किम्? 'सर्वा ता विष्य' (तै. सं. 3. 4. 11)। 'आ वृणे ता नो मृडातः' (तै. सं 2. 5. 12) 'सोमस्य ता मदे' (तै. सं 2. 3. 14) 'उग्रा ता नो मुञ्चतम्' (तै. सं. 4. 7. 15) 'परि ता बभूव' (तै. सं. 1. 8. 14) 'स्रुचेव ता हविषः' (त. सं. 4. 6. 9) [नाम स्था ता वः' ((तै. सं. 5. 6. 1)][211] 'जोहवीमि ता वाजम्' (तै. सं 4. 7. 15) ॥

पुराणा[212] नवग्वाः सपूर्वं[213] वसिष्ठा[214]
नवेदा[215]वरत्रा[216]नमस्या[217]वयस्याः[218] ॥ 40 ॥

---

210 c.f *SL* I 37, 38 'ताः। न जोहवीमि परि सोमस्य वृणे सर्वे वा ग्रास्थपूर्वः।'

211 No gap in Ms. Added by the editor.

212 *SL* I 48 '....पुराणाः....'

यजमान इति पदं सुन्वतीत्यस्मात्परमेकारान्तं भवति । 'सुन्वति यजमान आशिषः' (तै. सं. 3. 5. 6)। चतुर्थात्परपदात्पूर्वं दधातीत्येतस्मिन् परतः चशब्दाकृष्टं यजमान इति पदमेकारान्तं भवति । धातुमात्रे निर्देश्ये दधातिग्रहणं परस्मैपदोपलक्षणार्थम् आत्मनेपदनिवृत्यर्थं च । 'यजमान एव तेजो दधाति' (तै. सं. 6. 5. 5) 'यजमान आयुर्दधाति' (तै. सं. 2. 3. 2)। आत्मनेपदनिवृत्यर्थमिति किम् ? 'यजमान आत्मन्धत्ते' (तै. सं. 5. 3. 10) । एवम्पूर्वमेवम्परं चेति किम् ? 'तं वा एतं यजमान एव चिन्वीत' (तै. सं. 5. 6. 9) 'यजमान आशिषोऽवरुन्धे' (तै. सं. 6. 2. 9)। यजमान इति किम् ? 'रेत एव तद्दधाति' (तै. सं. 6. 4 1) 'गर्भ इन्द्रियमेवास्मिन् दधाति' (तै. सं. 2. 1 2) 'दध्यादाग्रयणम्' (तै. सं. 5. 7. 2) । पर उत्तर एतन्निवृत्यर्थम् (?)। 'यो यजत उपवीसीत्याह' (तै. सं. 6. 3. 1)। रोचतिरिति धातुग्रहणम्। रुचिधातुनिष्पन्नं पदमेकारान्तं भवति। 'देवानां रोचत एवम्'[230] (तै. सं. 5. 3. 10) 'रोचन्त एवैकविंशतिरात्रः'[231] (तै. सं 7. 3. 10) 'क्षामन्द्रुरुच उपसः'[232] (तै. सं. 4. 6. 1) इत्यादि। रोचतीति तिङन्तत्वेन निर्देशात् 'सूर्ये रुच उद्यत' (तै. सं. 4. 2. 9) इत्यादिषु एकारान्तत्वं न भवति । 'राष्ट्र एव विशम्' (तै. सं. 5. 4. 7) 'नू रण आयो घृणे' (तं. सं. 4. 6. 1) 'मरुतो विश्व ऊती' (तै सं. 3. 1. 11) 'वयस्वत उक्थायुवे (तै. सं. 1. 4. 12) ।। 69 ।।

वृष्टया एवे[233] तथा वज्रे[234] वर्चसे[235] वस्यसे[236] विशे[237] ।
वर आदि[238] व्रते[239] वारयते[240]ऽर्के[241] वृक्ष आयुनि[242] ।। 70 ।।

230 *SL* II 40 '...रोचते....'
231 *SL* II 40 '....रोचन्ते...'
232 *SL* II 40 '....रुरुचे....'
233 *SL* II 46 '....वृष्टया एवपरं भवेत् ।'
234 *SL* II 45 '....वज्र एव च ।'....'
235 *SL* II 42 '....वर्चसे....'

वृष्ट्या इति पदम् एव इत्यस्मिन् परतः ऐकारान्तं भवति । त्यादिप्राप्त्या सिद्धेऽपि नियमार्थमिदनुच्यते । 'वृष्ट्या एव लोकं करोति' (तै. सं 5. 4. 1) । एव इति किम् ? 'वायुर्वै वृष्ट्या ईशे' (तै. सं. 2. 4. 9) इत्यादि । तथेति एवे परत इत्यर्थः । वज्र इति पदम् एवेत्यस्मिन् परतः एकारान्तं भवति । 'वज्र एव वीर्यम्' (तै. सं. 7. 4.7)। तथेति किम् ? 'वज्र एकादशिनी' (तै. सं 5. 5. ) । 'वर्चस ओपधे' (तै. सं. 1. 2. 1) 'यथा वस्यस आहरति' (तै. सं. 6. 5. 10) 'स्वे लोके विशा इह' (तै. सं. 3. 5. 6) । वर इत्येतत्पदम् आद् इत्यस्मिन् परतः एकारान्तं भवति । 'वर आ पृथिव्याः' (तै. सं. 1. 2. 3) । आदिति किम् ? 'इयवर इति ब्रूयात्' (तै. सं. 7. 1. 6) 'अपि व्रत इन्द्रवायू (तै. सं. 2. 1. 7) 'वारयत एवैनम्' (तै. सं. 5. 5. 8) 'अर्क एव तदर्क्यम्' (तै. सं. 5. 3. 4) । वृक्ष इत्येतत्पदम् आयु इत्यस्मिन् परतः एकारान्तं भवति । 'परमे वृक्ष आयुधम्' (तै. सं. 4. 5 10) । आयुनीति इति किम् ? क उ स वृक्ष आसीत्' (तै. सं. 4. 6 2) ।। 70 ।।

श्रेयसे[243]ऽ। यते[244] श्रैष्ठये[245] वै पूर्णे[246] स्व उदात्तकम्[247] ।
सीनीवाल्यै[248] सहस्रे[249]ऽर्यै स्वारान्तं[250] स्वस्तये[251] स्तुते[252]
।। 71 ।।

---

236 वस्यसे वर्चसे in Ms. Cerreted by the editor according to the com,

237 *SL* II 46 '....विशे....'

238 *SL* II 42 '....आङ्परं वरे....'

239 *SL* II 42 '....व्रते....'

240 *SL* II 43 '... वारयते....'

241 *SL* II 7 '...अर्के....'

242 c. f *SL* II 43 '....वृक्ष आयुधम् ।'

'पापीयाञ्छ्रेयस आहृत्य' (तै सं· 1. 5. 7) 'त्रायत एवैनम्' (तै. सं. 6 4. 4) श्रैष्ठ्य आधेहृयेनम् (तै. सं. 3. 5. 4)। पूर्ण इति पदं वै इत्यस्मात्तत्परमेकारान्तं भवति। 'यो वै पूर्ण आसिञ्चति' (तै. सं. 7. 5. 6)। वै पूर्ण इति किम् ? 'पूर्णया जुहोति पूर्ण इव हि' (तै सं· 5. 1. 9)। स्व इति पदमुदात्तमेकारान्तं भवति। 'पिप्रीपति स्व आयुषि' (तै· सं· 1. 2. 14)। उदात्तमिति किम्? 'प्र हारावमन्त: स्व इति' (तै. सं. 2. 5. 2) 'कर्तो स्व इति।' (तै. सं. 2. 6. 7) 'सिनीवाल्या आग्नावैष्णवा:' (तै. सं· 5. 6 18)। 'सामासहस्र आ भज' (तै सं 7 1. 6)। अर्य इति पदं स्वरितान्तमेकारान्तं भवति। यदर्य एन:' (तै. सं. 1. 8· 3)। स्वरितान्तमिति किम्? 'अग्ने विश्वान्यर्य आ' (तै. सं. 2. 6. 11) 'स्वस्तय आसुरी' (तै· सं· 4. 1. 9) 'बहिष्पवमाने स्तुत आह' (तै. सं· 6 3. 1) 'स्तुत आश्विनो गृह्यते' (तै· सं. 6. 4. 9) ॥ 71 ॥

इमे[253] सन्त्वासते सर्वे[254] सूनवे[255] स्तोम उत्तरम् [256]
सोमे सेतौ[257] हुते[258] हस्ते[259] ज्योतिषे[260] महते यत: ।[261]
राज्ञे च[262] कुरुते[263] मेध्यै[264] कुर्वते[265] रिच्य[266]विन्दते[267]
॥ ·2 ॥

---

243 *SL* II 47 '....श्रेयसे....'
244 *SL* II 22 ' त्रायते....'
245 *SL* II 47 '....श्रैष्ठये ..'
246 *SL* II 28 '....वै पूर्णे ...'
247 c. f *SL* II 49 '....स्वे च नेतिपरम्....'
248 *SL* II 52 '....सिनीवाल्यै....'
249 *SL* II 50 '....सहस्रे ....'
250 c. f *SL* II 6 '....यदर्ये ...'
251 *SL* II 50 '....स्वस्तये....'

'इम एवास्मै लोकाः' (तै. सं. 2. 4. 10) 'अग्निं पुरीष्यमङ्गिरस्वदच्छेम इत्याह' (तै सं 5. 2 1) इत्यत्र इम इति पदं मन्त्रांशेन व्यक्तत्वादत्र न निर्दिश्यते। सर्वे इति पदं सन्तु आसते इत्येताभ्यां परम् एकारान्तं भवति। 'वि हवे सन्तु सर्वे इन्द्रावन्तः' (तै. सं. 4 7. 14)। 'त्रयस्त्रिंशदहमासते सर्वे एव (तै. सं. 7. 4 5)। सन्त्वासते इति किम्? 'योऽश्वमेधेन यजते सर्व एव'. (तै. सं. 5. 3 12) पितेवैधि सूनव आ सुशेवा' (तै. सं 4.3.4)। उत्तरं स्तोम इति पदमेकारान्तं भवति। 'अथो स्तोम एव स्तोमम्' (तै. सं. 7. 1 2)। उत्तरमिति किम्? 'स्तोम एव तत्स्तोमाय' (तै सं 7. 1 2)। उत्तरमिति विशेषणसामर्थ्यात् यत्र द्वयोरेव स-

---

252 *SL* II 51 '....स्तुते....'
253 c. f *SL* II 12 'इमे जेतिपरं भवेत्।'
254 *SL* II 49 '....सर्वे सन्त्वासतेपूर्वम्।'
255 *SL* II 50 '....सूनवे....'
256 c. f *SL* II 50 '....स्तोमेऽथोपूर्वं....'
257 c.f *SL* II 51 '.... सोमे त्वहीनपूर्वं स्यात्....'
258 *SL* II 53 '....हुते ..'
259 *SL* II 53 '....हस्ते....'
260 c. f. *SL* II 21 '....त्वा ज्योतिषे भवेत्।'
261 c. f *SL* II 32 '.... क्षत्राय महते....'
262 c. f *SL* II 41 '....यमाय राज्ञे....'
263 *SL* II 15 '....कुरुते....'
264 *SL* II 34 '....मेध्ये....'
265 *SL* II 17 '....कुर्वते....'
266 *SL* II 40 '....रिच्यते....'
267 *SL* II 43 '....विन्दते....'

न्निधानं द्वयोरपि संशयितत्वं तत्रैवायं विधिरुपतिष्ठते। तस्मात् 'षोडश स्तोम ओजः' (तै. सं. 4. 3. 1) 'चतुश्चत्वारिंश स्तोम ऋभूणाम्' (तै. सं. 4 3. 9) इत्यादिषु न भवति। पारशेष्याद् इदमेकमेवोदाहरणम्। सोम इति पदं सेतौ पदे परतः एकारान्तं भवति। इतिना सह वर्तत इति सेतिः। भाषितपुंस्कत्वात् पुंवद्भावः। 'द्वादशाहीने सोम उपैति' (तै. सं. 6. 2 3)। सेताविति किम्? क्रीतः सोम उपनद्धः' (तै. सं 6. 1. 11)। अत्र 'नानापदवदिङ्ग्यमसंख्याने' (तै. प्रा. 1. 48) इति न्यायाद् उप इत्यस्य सेतित्वं नास्ति। 'य द्धुत आदध्यात्' (तै. सं. 3. 4 10) 'हस्त आधाय सविता' (तै. सं. 4. 1. 1) 'दिवस्त्वा ज्योतिष आदित्येभ्यः' (तै. सं 4. 4. 6)। महत इति पदं य इत्यस्मात्परमेकारान्तं भवति। 'क्षत्राय महत आधिपत्याय' (तै. सं. 2. 8. 10)। य इति किम्? 'अमन्महि महत ऋतस्य' (तै सं. 1 8 10)। राज्ञ इति पदं चशब्दाकृष्टाद् य इत्यस्मात्परमेकारान्तं भवति। 'यमाय राज्ञ ऋश्यः' (तै. सं. 5. 5 1)। चशब्देन किम्? 'वरुणस्य राज्ञ आदित्यानाम्' (तै. सं. 4. 6. 4) 'शिर उत्तमं कुरुत एवम्' (तै. सं 7 5 8) 'मेषाय मेष्या अवाम्ब' (तै. सं. 1. 8. 6) 'उत्क्रोदं कुर्वत एवम्' (तै सं. 7. 5 9)। रिच्यविन्दते इति रिच्यते विन्दते इत्यर्थः। 'रिच्यत इव वा एतत्' (तै सं. 1. 7. 5) 'विन्दत ओषधयः' (तै. सं. 2. 1. 5)॥ 'अग्न उदवे'[268](5. ․. 9) 'अस्मा अस्तु सुवीर्यम्'[269] (तै. सं. 1. 5. 10) 'अमुष्मा आहवनीयः'[270] (तै. सं. 6. 1. 8) 'ते देवा एत एतान्'[271] (तै सं 3. 4. 4) कस्मा[272] इममा लप्स्यामह[273] इति'

---

268 *SL* II 7 '....अग्नेऽर्निग्यान्तं....'

269 *SL* II 8 '... अस्मै....'

270 *SL* II 9 '...अमुष्मै....'

271 *SL* II 15 '....एते....'

272 *SL* II 17 '....कस्मै...'

(तै. सं. 2. 1. 2) 'यन्म आत्मनः'[274] (तै. सं. 3 2. 5)' त इमां प्रतिष्ठामविन्दन्त'[275] (तै. सं 6. 2. 8),' 'तस्मा अरङ्गमाम वः'[276] (तै. सं. 4. 1. 5) इत्यादीनि 'पौनःपुन्यात्' (प. प्र. 8) इति परिभाषया सिद्धानि। 'आहुवध्या उभा राधसः'[277] (तै. सं. 1. 1. 14) 'मन्यन्त आशिरम्[278] (तै. सं. 6. 1. 6) । एते पदे, 'आहुवध्यै पोषं रयीम्' तै. सं 1. 1. 14) 'वदन्ति मन्यन्ते' (तै. सं. 6. 1. 6) इति च संहितयैव व्यक्ते । 'ऊर्ध्व ऊ षु ण ऊतय इति'[279] (तै. सं. 4. 1 4) 'द्युम्नं वृणीत पुष्यस इत्याह'[280] (तै सं 6 1. 2) 'वरुणस्य चक्षस इत्याह'[281] (तै सं 6. 1. 11) 'समुद्रस्य वोऽक्षित्या[282] उन्नय[283] इत्याह' (तै. सं. 6. 4 3) 'सुपारा नो असद्वश इत्याह'[284] (त. सं. 6. 1. 4) इत्यादीनि मन्त्रांशेन व्यक्तानि। 'वायव आरोहणवाही'[285] (तै. सं 5. 6. 21) 'पूष्णो रँह्या अपाम्'[286] (तै. सं 1. 3. 10)

---

273 *SL* II 42 '....लप्स्यामहे....'
274 *SL* II 32 '....मे....'
275 *SL* II 23 '....ते....'
276 *SL* II 24 '....तस्मै....'
277 *SL* II 10 '....आहुवध्यै....'
278 *SL* II 33 '....मन्यन्ते....'
279 *SL* II 13 ' ऊतये....'
280 *SL* II 29 '....पुष्यसे....'
281 *SL* II 20 '....चक्षसे....'
282 *SL* II 8 '....अक्षित्यै....'
283 *SL* II 27 '....नये....'
284 *SL* II 46 '....असद्वशे....'
285 *SL* II 44 '....वायवे....'

'दक्षिणेंऽस उपदधाति'[287] (तै.सं. 5. 3. 1) 'पशून्नाभिमँम्य इति'[288] (तै. सं. 3. 1. 9)–एतानि पदानि 'अते समानपदे नित्यमवे च' (तै. प्रा. 4 54) 'रँह्यै च' (तै. प्रा. 16. .3) 'अवग्रह् उदात्तौं ऽ सेौं ऽ सायाँ [साभ्यामँसाविति'] (तै. प्रा. 16 30) 'मँस्ये[मँ] सतँयँसद् [यँसन्त्वँसतेवँसगः]' (तै. प्रा. 16. 20) इति स्वरूपग्रहणेन व्यक्तानि। 'अग्नये शुचय आयुः[289] (तै. सं. 2. 2. 4) इन्द्राय त्वा मरुत्वत एषः'[290] (तै. सं. 1. 4. 17) इत्यादीनि 'पदात्संशयितात्' (प. प्र. 7) इति परिभाषया व्यक्तानि ।। 72 ।।

अथावर्णाददेडश्चाप्यनु नोच्चमवापरः[1] ।
रानुनास्यादिसंयोगाद्यं पदं स्वर्यते न चेत्[2] ।। 73 ।।

---

286 *SL* II 41 '. रँह्यै ...'

287 *SL* II 7 '....अंसे....'

288 *SL* II 33 '....मंस्ये ..'

289 *SL* II 47 '....शुचये ...'

290 *SL* II 31 '....मरुत्वते '

1 c. f. *SL* V 34

'नोदात्तो यः पदाध्याय उदात्तः संहितागमे ।
यश्चोदात्तः पदाध्याये स्वरितः संहितागमे ।।
अघोपाक्षरतः पूर्वं ओकारः सांहितश्च यः ।
तेभ्यः परः पदाध्याये त्वकारः स्यात्पदादिगः ।।'

2 c. f *SL* V 5

'संयोगादिगतो रेफो यश्छकारपरो न तु ।
संयोगाद्युत्तमो यश्च पदस्थः स्वारितो न तु ।।
यश्चानुस्वार एतेभ्योऽकारः पूर्वः पदादिगः ।।'

अथेत्ययमधिकारः। अवर्णादेङश्च परतः पदादिरकार उच्यते इति। एङ इति प्रत्याहारग्रहणम्। एकारादोकाराच्चेत्यर्थः। अवर्णादित्ययमधिकारः 'आह चान्वर्थम्' (प. प्र. ४४) इत्येवमन्तमनुवर्तते। एङ इत्ययं तु अन्वाचयशिष्टत्वाद् अकारपरविषय एव पर्यवस्यति। अवर्णादिति सामान्येन ग्रहणेऽपि अत्र दीर्घमात्रमुपयुज्यते। अवर्णादेङश्च इति पञ्चमीनिर्देशात् परत्वं गम्यते। 'आदेः परस्य' (अष्टा. 1. 1. 54) इति न्यायाद् 'व्युत्पूर्व अननुदात्तः' (तै. प्रा. 3 10) इत्यत्र तथा दर्शनाच्च अकारस्य पदादित्वं गम्यते। 'विकारी स्पष्टमुच्यते' (प. प्र. 9) इति अत्रानुवर्तते। ननु एङ उत्तरस्याकारस्य 'लुप्यते त्वकार एकार ओकारपूर्वः' (तै. प्रा. 11. 1) इति लोप एवोक्तः, कथं विकारीत्युच्यते? सत्यम्; 'एङः पदान्तादति' (अष्टा. 6. 1. 109) इति पाणिनीये पूर्वरूपविधानाद्विकारित्वम्। अथवा एतदर्थं 'अथापूर्वोऽभिनिष्ठानः' (प. प्र 21) इत्यत्र अपूर्व इत्यस्य लोपार्थस्यानुवर्तनं भवतु। 'दीर्घं समानाक्षरे सवर्णपरे' (तै. प्रा. 10. 2) 'लुप्यते त्वकार एकार ओकारपूर्वः' (तै. प्रा. 11. 1) इति येषां पदानामक्षरसंहितालक्षणमुक्तं तानि अत्र गृह्यन्ते। 'ऊष्मण्या ऽपिधाना चरूणाम्' 3 (तै. सं. 4. 6. 9) 'इध्मेऽपि मयूखान्' (तै. सं. 2. 3. 1)। अनु इत्येतत्पदं सर्वोदात्तं वर्जयित्व। अकारादि भवति। 'अवरुन्धेऽनुष्टुभ उपदधाति 4 (तै. सं. 5. 3. 8) 'अनुपिताऽनुभ्राता' (तै सं 1. 2. 4)। नोच्चमिति किम्? 'शृणोत ग्रावाणो विदुषो नु' (तै. सं. 1. 3. 13) 'प्रजयान्वग्रे' (तै. सं 3. 1. 4) 'पशवोऽवरुध्या आरण्याः' (तै. सं. 1. 6. 7) 'तं वो मावक्रमिषम्' 5 (तै. सं. 1. 2. 3)। अत्र स्वत एव प्रसिद्धानामुपसर्गाणाम् अपि अनु अव इत्येतेषां ग्रहणम्' 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति

---

3 *SL* V 22 '....अपि....'
4 *SL* V 21 '....अनु....'
5 *SL* V 35 '....अव....'

विकल्पेनाकारदर्शनात् न इति प्रयोगदर्शनाच्च । तच्छङ्कानिराकरणार्थं अनु अपर इति शब्दग्रहणं न तु पदग्रहणम् । अपरशब्दोपपन्नं पदमकारादि भवति । 'राकापरपक्षः' [6] (तै. सं. 3 4. 9) 'दह्रं वै सापराभ्याम्' (तै. सं. 7. ৬. 3) । अनुनास्यशब्देन अनुस्वारोत्तमा गृह्यन्ते । 'अनुस्वारोत्तमा अनुनासिकाः' (तै. प्रा. 2. 30) इति दर्शनात् । रानुनास्यादीति संयोगविशेषणम् । संयोगाद्यमिति पदविशेषणम् । रेफः अनुस्वारः उत्तमो वा यस्य संयोगस्यादिः स संयोगो यस्याद्यः तत्पदमकारादि भवति स्वरितं वर्जयित्वा । 'मखस्य मायशोऽर्यादिति (तै. सं. 3. 2 4) 'अर्यमाऽर्यमणमेव' (तै. सं. 2. 3. 4) 'लोकेऽर्धुकं भवति' (तै सं 2. 5. 5) 'त्तयांऽशमुवा' (तै. सं 6. 4. 8) 'पशवः सोमोंऽशून्' (तै. सं 6. 4. 4) 'सधस्थोंऽगिरस्वत्' (तै. सं. 4. 1. 6) 'स्वाहांऽगिने स्वाहा' (तै. सं. 7. 5. 12) 'वसवस्त्वाञ्जन्तु' (तै. सं. 7. 4. 10) 'अवरुन्धेऽञ्जलिना (तै. सं. 5. 4. 9) वशाम्नाय' (तै. सं. 1. 3. 14) इत्यादि । पदाधिकारत्वेऽपि पदमिति पुनर्ग्रहणं पदकालेऽपि संयोगादित्वज्ञापनार्थम् । तेन 'अधिष्कन्ना न्यमेहत्' (तै. सं. 2. 2. 8) इत्यादिषु अकारादित्वं न भवति । स्वर्यते न चेदिति किम् ? 'सेनान्यो गृहे' (तै सं 1 8 9) 'असावादित्यो न्यङ्' (तै. सं. 2. 4. 10) । संयोगस्य विशेषणेन किम् ? देवो वः सविता प्रार्पयतु' (तै. सं. 1. 1 1) । संयोगादीति किम् ? 'यो रुद्रो अग्नौ' (तै. सं. 5. 5. 8) ॥ 73 ॥

दत्वते परपक्षश्रुदन्यत्र प्रादवग्रहात् [7] ।
अपृञ्छ्रुदन्तोञ्च [8] मश्वा [9] जारुणा[10] ग्र[11] श्रुदथास्थवात्[12] ॥ 74॥

---

6 *SL* V 23 '....अपर ...'

7 c. f *SL* V 9

यद्यद् दत्वत इत्यत्र परपक्षगतं पदम् ।
तत्तत्सर्वमकारादि जननायेति वर्जयेत् ॥'

8 c. f. *SL* V 21 '....अन्तोदात्तमपस्तथा....'

दत्वत इत्यनुवाकस्य ऊर्ध्वपक्षगं पदमकारादि भवति अवग्रहरूपं प्र इत्येतद्वर्जयित्वा। 'स्वाहादन्तकाय' (तै. सं 7. 5. 12) 'स्वाहा-मुखाय' (तै. सं. 7. 5. 12)। श्रृद्ग्रहणं [पदा]न्तरेऽपि भवतीति ज्ञापयति। 'पूषा प्रपिष्टभागोऽदन्तकः' (तै सं 2. 6. 8) 'ऋक्षा वा एषाऽलोमका' (तै. सं. 2 6. 5)। 'ओष्ठाभ्यां स्वाहा मुखाय' (तै. सं 7 3. 16)।'स्वाहा नासिकाभ्याम्' (तै. सं 7. 3. 16) 'स्वाहा मनः प्रजापतये'(तै. सं. 7. 3. 15) इत्यादिषु अकारादित्वं न भवति। कुतः? उच्यते—स्वरभेददर्शनात्। तुल्यस्वरत्वमेव तच्छब्दनियामकम्। 'तुल्यःस्वरः स्वरूपार्थे पदे भेदेऽपि तत्सुगाम्' इति दर्शनात्। प्राद-वग्रहादन्यत्रेति किम्? 'स्वाहा प्रजननाय' (तै. सं. 7. 5. 12)। अवग्रहादिति किम्? 'स्वाहाऽप्राणाय' (तै. सं 7. 5. 12)। 'स्वाहा-ऽप्राणते' (तै. सं. 7. 3 14) इत्यत्र संहितास्वरसामर्थ्यादेवाकारादित्वं गम्यते। परपक्ष इति किम्? 'अदन्तकाय स्वाहा प्राणिने' (तै. सं. 7. 5. 12)। 'अनासिकाय स्वा [हा] क्षण्वते' (तै. सं. 7. 5. 12) इत्यत्र 'अवग्रहो वृषण्च्छीर्षण्ब्रह्मण्णक्षण् [चर्मणचर्षण्]' (तै. प्रा. 13. 13) इति ग्रहणाद् अकारादित्वं व्यक्तम्। अप्शब्दोत्पन्नं पदमन्तोदात्तमका-रादि भवति। इङ्ग्यविषये अन्तोच्चत्वमंशकद्वयापेक्षत्वम्। उत्तरांश एव-मिव भवति। 'अनुदात्तं पदमेकवर्जम्' (अष्टा. 6.1.158) इत्यादि-स्वरविधौ नानापदत्वाभावात्। 'ज्योतिषापस्ततान' (तै. सं. 1. 5. 11) 'यजतेऽपोऽवभृथम्' (तै. सं. 6. 6. 3) 'दिव आद्भिः समुद्रं पृण' (तै. सं. 2. 4. 8) 'स्वाहाद्भ्यः स्वाहा' (तै. सं. 1. 8. 13) 'स्वाहापा-म्मोदाय' (तै. सं. 7. 1. 14) 'यथाऽप्सु नावा' (तै. सं. 5. 3. 10)।

---

9 c. f. *SL* V 7 '....अश्वशब्दो नविच्छवोन्तः....'

10 *SL* V 6 '....अरुणशब्दौ च....'

11 *SL* V 6 '....अग्र....श्रुतिः....'

12 *SL* V 40 '....अस्थेंग्येऽस्थयन्....'

अन्तोच्चमिति किम् ? 'स्वाहापो देवीः' (तै सं. 1. 2. 2)। अश्व अज अरुण अग्र इत्येतच्छब्दोत्पन्नं पदमकारादि भवति। 'देवताश्वयुजौ नक्षत्रम् (तै. सं 4 4. 10) 'प्रभुः पित्राश्वोसि' (तै. सं· 4. 4 8)। 'यजते श्वः श्वोऽस्मै' (तै· सं· 2. 5. 4) इत्यत्र 'द्विरुक्तं तु तदंशवत्' (प. प्र. 7) इति न्यायादकारादित्वं न भवति। 'रसतेऽजक्षीरे'[13] (तै सं. 2. 2. 4) 'सुवर्धामाजोसि'[14] (तै. सं· 1. 3. 3) 'गौश्छन्दो जा छन्दः'[15] (तै. सं. 4. 3. 7) 'यन्तो जायां धर्मम्'[16] (तै. सं. 5. 4. 3)। 'यथा जायामानीय' (तै. सं. 5. 3 7) इत्यत्र स्वरभेदाद्द्व्यक्तस्य जाया-शब्दस्य अकारादित्वं न भवति। 'स्वाहारुणैताय' (तै· सं· 7. 3. 17) 'क्षोधुकोरुणो ह' (तै. सं. 6. 1. 9) 'आराग्रावान्तरदीक्षा' (तै. सं 6. 2. 3) 'आराग्रामवान्तरदीक्षाम्' (तै· सं· 6. 2. 3) 'साग्रे प्रश्नात्' (तै. सं. 6. 5. 6)। अथेत्ययमधिकारः। अस्थेत्यादीनि खण्डपदान्युच्यन्त इति। 'स्नावभ्यः स्वाहास्थभ्यः' (तै. सं. 7. 3.16) स्वाहास्थन्वते' (तै. सं. 7. 5. 12) ॥ 74 ॥

अक्रुष्टोतर[17] मन्येकेऽध्रा[18] दब्धा[19] पो ऽभि[20] मान्यरिम्[21] ।
अनोऽमीवा[22] हुता[23] ष्ठीवद[24] यानानुच्चमिङ्गचकम् ॥ 75 ॥

---

13 *SL* V 14 '...अजक्षीरे....'
14 *SL* V 14 '....अजः....'
15 *SL* V 15 '....अजा....'
16 c. f *SL* V 15 '....तेऽजायां...'
17 *SL* V 11 '...अक्रुष्टपच्यं पाश्चात्यं....'
18 c. f *SL* V 13 '....अधावग्रहवर्ति स्यात्....'
19 *SL* V 16 '...अदब्ध....'
20 *SL* V 24 '....अभिमाति....'
21 *SL* V 31 '....अरिम्।'

अकृष्टेति पममुत्तरमकारादि भवति । 'अकृष्टपच्यञ्च मेऽकृष्टपच्यम्' (तै. सं. 4. 7. 5) । उत्तरमिति किम् ? 'ओषधयश्च मे कृष्टपच्यम्' (तै. सं. 4. 7. 5)। अनीत्येतत्पदमेक इत्यस्मिन् परतः अकारादि भवति । 'संक्रन्दनोऽनिमिष एकवीरः'[25] (तै. सं. 4. 6. 4) । एक इति किम् ? 'इषवो निमिषो वातनामम्' (तै. सं. 5 5. 10) । ननु एकशब्दः सर्वादिषु पठ्यते। तस्मादेकस्मिन्निति वक्तव्ये एक इति ग्रहणं कथम् ? उच्यते- सर्वनामत्वं वाच्यविवक्षायां, न तु वाचकविवक्षायाम्, 'एकाच्च प्राचाम्' (अष्टा 5. 3. 94) इत्यादिदर्शनात् । 'सविताघशंसात्' (तै. सं. 1. 6. 3) 'माघशंसः' (तै. सं. 1. 1. 1) 'अग्नेदब्धायो' (तै. सं 1. 1. 13) 'अवयजतेपोनप्त्री'[26] (तै. सं 2. 3. 12) 'शतोतयेभिमातिषाहे' (तै. सं. 5. 7 2) 'अकवारिन्दिव्यम् (तै सं. 1. 4. 17) 'स्वराज्ञेनोवाहौ (तै. सं. 5. 6 21) 'रक्षोहामीव चातनः' (तै. सं. 1. 4. 46) 'अग्धादेकोहुतात्' (तै. सं. 3. 3. 8) 'मधुपाहुतादः' (तै. सं 5. 4. 5) 'स्वाहाष्ठीवद्भ्याम् (तै. सं. 7. 3. 16) 'या ते अग्नेयाशया'[27] (तै. सं. 1. 2. 11) 'हूयन्तेनायतनाः'[28] (तै. सं. 3. 1. 9) । अनेत्युत्तरत्रापि सम्बध्यते । इङ्ग्यमेवेङ्ग्यकम् । इङ्ग्यमिति वक्तव्ये इङ्ग्यकमिति वदता क्वचिदप्रवृत्तिश्च द्योत्यते । अनानुच्चमित्येकं पदम् । विधीयमानाकारव्यतिरेकेणोदात्तरहितमिङ्ग्यं पदमकारादि भवति । इङ्ग्यांशाधिकारत्वेऽपि इङ्ग्यमिति पुनर्ग्रहणम् अंशद्व-

---

22 *SL* V 25 '....अमीव....'
23 *SL* V 41 '....अहुतात्....'
24 *SL* V 38 '....अष्ठीवत्....'
25 *SL* V 19 '....क्रन्दनोऽनिमिषः....'
26 *SL* V 22 '....अपोनप्त्रीयं....'
27 c. f *SL* V 27 '....अयाशया....'
28 *SL* V 20 '....अनायतनाः....'

यस्यात्त्यनुदात्तत्वज्ञापनार्थम् । 'लोकंपृणायातयामा'[29] (तै. सं. 5. 7. 5) 'एतयोरन्योनिर्दिष्टभाग:'[30] (तै. सं. 2. 2. 4) 'विरोकेऽयस्थूणौ'[31] (तै. सं. 1. 8 12) 'अश्वोयुक्तोविमुच्यमान:'[32] (तै सं. 3 4. 10) 'वेतसेवत्तरन्नदीपु'[33] (तै. सं 4. 6. 1) 'साप्राप्य न्यवर्तत'[34] (तै. सं.6. 1. 6) 'यज्ञेनवक्लृप्त:'[35] (तै. सं. 7. 1. 1) इत्यादिप्राचुर्या। भिप्रायेणेदमुक्तम् । 'या जिह्वा जातवेद:' (तै. सं 5. 7. 4) इत्यादिपु न भवति । अचुच्चमिति किम् ? 'सा विराड् विक्रम्य' (तै. सं 7. 3. 9) 'निर्वीर्य: शिथिलो यातयामा' (तै सं. 7. 1. 8) । अकारस्यानुदात्तत्वे पर्युदस्ते पारिशेष्यादुदात्तत्वं गम्यते । 'उदात्तश्चानुदात्तश्च वर्णानां प्राकृतौ स्वरौ' इति दर्शनात् । अस्य प्रयोजनं, 'लोकंपृणायातयामा' (तै. सं. 5. 7. 5) इत्यादिष्वाकारपूर्वविषयेष्वकारस्योदात्तत्वम् । 'आ नो मित्रावरुण' (तै. सं. 1. 8. 22) इत्यादिषु अकाराभावश्च [इति] ज्ञायते ॥ 75 ॥

अभिप्रयात्य[36] क्षर[37] श्रुदवयो[38] श्रि[39] रजे[40] दथ ॥ 76 ॥

---

29 c. f *SL* V 28 '....अयातयामा हि ...'
30 *SL* V 21 '....अनिर्दिष्ट....'
31 *SL* V 27 '....अयस्थूणौ...'
32 c. f *SL* V 28 '....व्योयुक्त:....'
33 *SL* V 38 '....अवत्तरं....'
34 *SL* V 22 '....अप्राप्य....'
35 *SL* V 21 '....अनवावग्रह....'
36 *SL* V 24 '... अभिप्रयायी....'
37 *SL* V 6 '...अक्षर....श्रुति:....'
38 *SL* V 36 '...अजावय:....'
39 *SL* V 38 '....अश्रि:....'
40 *SL* V 14 '....अजेत्....'

'तस्मादुत्तरतोभिप्रयायी जयति' (तै. सं. 5. 3. 2) 'साष्टाक्षरा समपद्यत' (तै. सं. 6. 1 6) 'अष्टाक्षराणि त्रीणि (तै. सं. 6. 1. 2) 'उपाँश्वन्तर्मामावजावयः' (तै. सं. 6. 5. 10) 'अष्टाश्रिर्भवति' (तै. सं. 6 3. 3) 'गामाजेत्ताम्' (तै. सं. 2. 2. 6)। 'मिमीते—यातयाम्नियायातयाम्निया'[41] (तै. सं. 6. 1. 9) इत्यत्र पूर्वांशस्य संहितास्वरेणैव अकारादित्वं व्यक्तम् उत्तरांशस्य तु 'द्विरुक्तं तु तदंशवत्' (तै. सं 7) इति न्यायात्। अथेत्ययमधिकारः। अदन्तमित्यादिना अखण्डपदान्युच्यन्ते इति ॥ 76 ॥

अदन्तं तोपधं म्नान्तमदुपान्त्यमनुच्चकम्।
निष्ठानतान्तमा पष्ठान्माङो नानन्ययोगिनः ॥ 77 ॥

अनुच्चमेवानुच्चकम्। एतद्विशेषणं सर्वत्र सम्बध्यते। अकारान्तं तकारोपधमनुदात्तं पदमकारादि भवति। पूर्वत्र विधीयमानस्याकारस्य स्वत एवानुदात्तत्वं गम्यते। 'साकामयतौषधीभिः'[42] (तै. सं 7. 4. 3) 'ते प्रजा वित्वाकामयन्त'[43] (तै सं. 6 1. 8) 'यद्यज्ञेकुर्वत'[44] (तै. सं. 3 2. 2) 'द्यां वाज्यांक्रंस्त'[45] (तै सं. 7. 5. 19)। म्नान्तं मकारान्तं नकारान्तं चेत्यर्थः। अकारोपधं मकारान्तं नकारान्तं वा उदात्तरहितं पदमकारादि भवति। 'पृथिवीमाक्रमिषम्'[46] (तै. सं 6. 7. 1) 'योलं प्रजायै'[47] (तै. सं. 2. 2. 5) 'समुचित्तान्याकरम्'[48] (तै.

---

41 *SL* V 28 '....अयातयाम्निया....'
42 *SL* V 11 '....अकामयत....'
43 *SL* V 11 '....अकामयन्त....'
44 *SL* V 10 '....अकुर्वत....'
45 *SL* V 11 '....अक्रंस्त....'
46 *SL* V 11 '....अक्रमिषम्....'
47 *SL* V 33 '... अलं....'
48 *SL* V 11 '....अकरं....'

सं. 4 5. 1) 'पत्नयोग्रे कुर्वन्' [49] (तै. सं. 5. 1. 7) 'अयतनेष्टमेहन्' [50] (तै. सं. 7. 2 8) इत्यादि। अभिनिष्ठानो निष्ठानशब्देनोच्यते। विसर्जनीय इत्यर्थः। विसर्जनीयान्तं तकारान्तं वा उदात्तरहितं पदमकारादि भवति। अत्र उपधानिर्बन्धो नास्ति। 'प्रतिधातवेकरुत' [51] (तै. सं. 1. 4. 45) 'अजर उष आगाः' [52] (तै. सं. 4. 3. 11) 'विसारेहिर्धुनिः' [53] (तै. सं. 3. 1. 14) 'येकर्णाः स आज्ये' [54] (तै. सं. 1. 8. ७) 'पुरोजातः स्यात्' [55] (तै. सं. 1. 5 8) 'येणिष्ठास्तान्' [56] (तै. सं. 2 5. 5) 'परोवरैस्तन्त्वा जुषे' [57] (तै. सं. 1. ३. 5) 'पुत्रंमेवधीरिति' [58] (तै. सं. 2. 5. 2) 'अपोह प्रविशति' [59] (तै स 6. 4. 2) 'स आगच्छन्सोब्रवीत्' [60] (तै. सं 3. 1. 9) 'साब्रवीद्वरं वृणै' [61] (त. सं 2. 5. 1) इत्यादि। अदन्तमिति किम्? 'ते नो मुञ्चतमंहसः' (तै. सं. 4. 7. 15) 'तस्मादोषधयः पराभवन्ति' (तै. सं. 2. 6. 4)। तकारोपधमिति किम्? 'वारिणा प्रथस्व' (तै. सं. 4. 2. 8)। अनुच्चमिति किम्? 'तमसा वरन्त' (तैसं. 4. 3. 15)। म्ना-

---

49 *SL* V 10 '....अकुर्वन्...'

50 *SL* V 41 '....अहन्....'

51 *SL* V 10 '...अकः....'

52 *SL* V 12 '....आऽगाः....'

53 *SL* V 41 '....अहिः....'

54 c. f. *SL* V 10 '....अकर्ण। उत्तरं तथा....'

55 *SL* V 14 '....अजातः....'

56 *SL* V 15 '....अणिष्ठाः....'

57 *SL* V 35 '....अवरैः....'

58 *SL* V 34 '....मेऽवधीः....'

59 *SL* V 41 '....अहः....'

60 *SL* V 12 '....अगच्छत्....'

61 *SL* V 23 '....अब्रवीद्....'

न्तमिति किम् ? 'वरिणा प्रथस्व' (तै. सं. 4. 2. 8)। अदुपान्त्यमिति किम्? 'त्वत्वा वज्रिन्' (तै. सं. 2. 4. 14) 'सहस्रियो दीप्यताम्' (तै सं 4 6. 13) 'द्रविणमायजन्ताम्' (तै. सं. 4. 7. 14)। अनुच्चमिति किम्? 'प्र मृणो युधा जयन्' (तै. सं. 4. 6. 4)। निष्ठानतान्तमिति किम्? 'आ वर्तन वर्तय' (तै. सं. 3. 4. 1)। 'धन्वना गा धन्वनाजिम्' (तै. सं. 4. 6. 6) इत्यादि। उक्तस्यादन्तादिविधिपञ्चकस्य प्रतिषेध आरभ्यते। अन्यपदेनानन्वितादु मा इत्यस्मात् पदात् षष्ठपदादर्वाक् परस्य पदस्य अकारादित्वं न भवति। 'ततो मा पराभूवम्' (तै. सं. 2. 5. 1) इति। 'मा मे हार्दि त्विषा वधीः' (तै. सं. 3. 2. 5)। 'मा मो अस्माँ अवहाय परा गात्' (तै. सं. 5. 7 9) 'प्राणो मा मा हासीत्' (तै. सं. 5. 7. 1) 'मा नो हिंसीज्जनिता' (तै. सं. 4 2 7) इत्यादि। अनन्ययोगिन इति किम्? 'प्राणो मा मा हासीदन्तरिक्षमाक्रमिषम्' (तै. सं. 5. 7. 1)। आ षष्ठादित्ययमभिविधिः 'पर इत्युत्तरः' (तै. प्रा. 1. 30) इत्यस्य न्यायनिवृत्त्यर्थम्। माङ इति ङकारान्तत्वेन ग्रहणं प्रतिषेधार्थस्य मा इत्येतस्य द्योतनार्थम्। तच्चोदात्तत्वेन ज्ञायते। तस्मात् 'पूषा माधात्' (तै. सं. 4. 2. 8) इत्यादिषु अकारस्य निषेधो न भवति ।। 77 ।।

[न] दीर्घच्छशठन्मध्यं याद्यासुघ्वन्तमन्तकम्।
एदादिकं भुवद्वक्षत्पात वो नो नपाद्वधीत् ।। 78 ।।
राजन्दधत्तर्पयत रासदादीनि गन्गत।
दधर्षीद्वाः करद्दस्राहंवन्त जुहवन्नशत्।
सनवो मृडपूरादि तत ब्रूतान्नरः पत ।। 79 ।।

जेत्यनुवर्तते पतेत्यन्तम्। दीर्घमध्यं छकारमध्यं शकारमध्यं ठकामध्यं वा अकारादि न भवति। ठदिति तपरकरणं छकारादिसर्वैः सम्बध्यते। अकारस्य द्योतनार्थम्। अन्यथा 'अकारो व्यञ्जनानाम्' (तै. प्रा. 1. 21) इति न्यायाद् व्यञ्जनमात्रं गम्यते। मध्यग्रहणात् परस्य

बहुस्वरत्वं गम्यते। उदाहरणानि। 'तदभीषहा पुनरा ददीत' (तै. सं. ‌6. 1. 10) 'उद्वास्य पुनरा दधीत' (तै. सं. 1 5. 1) 'अस्मद्वात्रा देवत्रा गच्छत' (तै. सं. 1. 4. 43) 'दाशुषे यच्छताधि' (तै सं. 1. 5. 11) 'शिवेन मा चक्षुषा पश्यत' (तै. सं. 5. 7. 1) 'स्योना मा विशतेराः' (तै. सं. 1 5. 6) 'गन्धर्व मा तिष्ठतानु' (तै. सं. 3. 5. 6)। दिर्घादिमध्यमिति किम् ? 'साकामयत'[62] (तै. सं 7. 4. 3) 'आधारमाघारयत्'[63] (तै. सं. 2. 5. 11) 'दक्षिण आसादयन्'[64] (तै. सं. 6. 1. 11) 'स आगच्छत्'[65] (तै. सं 3. 1. 9) 'यान्तेगच्छन्'[66] (तै. सं 5. 6. 5) 'ताञ्जमदग्निस्तपसापश्यत्'[67] (तै. सं. 3. 3. 5) क्षुरपविर्भूत्वतिष्ठात्[68] (तै सं 5. 6. 6)। यादन्तं यास्वन्तं ध्वमन्तं तमन्तं च अकारादि न भवति। 'वारुण्यर्चा जुहुयात्' (तै. सं. 5. 7. 6) 'गृहपतिना भूयाः' (तै. सं. 1. 5. 6) 'पेशो मर्याः (तै सं. 7. 4. 10) 'गृहपतिना भूयासम्' (तै. सं. 1. 5. 6)। यासुग्रहणेन सिद्धे याद्ग्रणं व्यक्तयर्थम्। 'तपसा तप्यध्वम्' (तै. सं. 1. 1. 7) 'आतय यध्वम्' (तै. सं 1. 1. 1) 'इन्द्राग्नी आ गतम्' (तै. सं. 1. 4. 15) 'प्र बाहवा सिसृतम्' (तै. सं. 1. 8 22) इत्यादि। एदादिपदमकारादि न भवति। 'आपो देवीः' (तै. सं. 1. 1. 5) 'इन्द्रो नेपत्' (तै. सं. 5. 7. 2) इत्यादि। 'कया नश्चित्र आ भुवत्' (तै. सं. 4. 4. 12) 'हव्या

---

62 *SL* V 11 '....अकामयत....'

63 *SL* V 13 '....अघारयत्....'

64 *SL* V 39 '....आऽसादयन् '

65 *SL* V 12 '....अगच्छत ...'

66 *SL* V 13 '....अगच्छन्....'

67 *SL* V 22 '... अपश्यत्....'

68 *SL* V 16 '....अतिष्ठत्...'

नो वक्षत्' (तै· सं 3. 5. 11) 'दिग्भ्यो मा पात' (तै· सं· 1. 8. 12) 'मा वोरिषत्' (तै. सं· 4. 2. ०) 'मा नो हिंसीत्' (तै· सं 4 2 7)। वो न इत्येतयोर्ग्रहणं माङ्योगाभावात्। 'ऊर्जो नपात्' (तै· सं· 4. 2. 7) 'ऊर्मिर्न नावमा वधीत' (तै. सं 2. 6. 11) 'धाम्नो धाम्नो राजन्' (तै. सं. 1 3. 11) 'सुवर्देवेषु नो दधत्' (तै. सं 4. 1. ८) 'आयुर्मे तर्पयत' (तै. सं. 3 1. 8) 'स नो रासत्' (तै. सं. 1. 1. 14) 'सह वर्चसा गन्' (तै· सं. 5. 6. 1) 'विश्वे देवास आ गत' (तै· सं· 1. 4. 1') 'व्यथिरा दधर्षीत्' (तै. सं 1. 2. 14) 'आपानं मे दाः' (तै· सं 3. 3. 5) 'मुखा करत्' (तै· सं· 1. 5 11) 'न वो दस्राः' (तै सं. 2. 4. 8) 'सदा हवन्त' (तै· सं 4 3. 13) 'न वाचा जुहवन्' (तै. सं 2. 5. 11) 'कर्मणा नशत्' (तै सं. 1. 8. 22) 'दीक्षिता सनवः' (तै. सं. 3. 5. 6)। मृड पूर इत्येवमादि पदमकारादि न भवति। 'ते नो मृडयत' (तै. सं· ०. 5. 10) 'आ पूर्याः स्था मा पूरयत' (तै. सं. 3. ८ 8) 'एतत्ते तत' (तै. सं. 1. 8. 5) 'प्रणो ब्रूतात्' (तै. सं. 1. 6. 4) 'युधो नरः' (तै. सं· 4. 6· 4.) 'श्येनो भूत्वा परा पत' (तै सं. 1. 2. 9)। 'संसमिद्युवसे वृषन्' (तै. सं· 2. 6. 11) इत्येतत्पदं 'अधिवृषन्' (तै· सं 2. 6 11) इति संहितयैव व्यक्तम्। 'भद्रा ते पूषन्' (तै. सं. 4. 1. 11) इत्यत्र पूषन्निति पदं संहितयैव व्यक्तम्। अकारादित्वे सति याज्याविषयत्वादकारस्य लोपो न भवति। रासदादिग्रहणम् एवंविधानामुपलक्षणार्थम्। एवं सर्वत्र यथासंभवमूहनीयम् ।। 79 ।।

अजिह्री[69] तादधु[70] रगु[71] रद्या[72] बिभरु[73] रघ्वन[74] ।
अदत्त तद[75] यक्ष्म[76] ञ्चारेतोधत्ता[77] वृणीत वे[78] ।। 80 ।।

---

69 *SL* V 14 '....अजिहीत....'
70 *SL* V 17 '....अदधुः....'
71 *SL* V 12 '....अगुः....'

नेति निवृत्तम् । अजिहीतेत्यादीनि पदानि अकारादीनि भवन्ति । पर्णं पराजिहीत' (तै· सं· 5. 4 3) । अदन्तादिप्राप्ते दीर्घमध्यत्वे प्रतिषेधात् प्रतिप्रसवार्थमस्य पुनर्ग्रहणम् । एवम् 'अवृणीत वे' इति । जवमादधुः' (तै. सं. 1. 7. 7) 'ज्योतिषागुः' (तै. सं. 4. 3. 11) 'अमा वै नोद्य' (तै. सं 2 5. 3) 'वसवोबिभरुः' (तै. सं 5. 5. 2) । अदधुः अगुः अबिभरुः इत्येतेषां ग्रहणं नियमार्थम् । आकारोपधेषु अभिनिष्ठानान्तेषु एतत्पदत्रयमेव अकारादि भवति । तस्मात् 'तनुविरेप आधुः' (तै. सं. 4. 3. 13) इत्यादिषु अकारादित्वं न भवति । 'पूषाध्वनः' (तै. सं 1. 2. 4) । अस्य ग्रहणम् अकारस्योदात्ततार्थम् । एवमुत्तरत्रापि यथासंभवं द्रष्टव्यम् । अदत्तेति पदं तत्परमेव अकारादि भवति । 'रेत आदत्त तत्' (तै. सं 7. 1. 1) । तदिति किम् ? 'तावन्नो दत्तेति' (तै. सं. 6. 2. 4) 'अमृतञ्च मेयक्ष्मञ्च मे' (तै· सं. 4. 7. 3) । चेति किम् ? 'परा यक्ष्मम्' (तै· सं. 1. 3. 14) । अधत्तेति पदम् आ रेतः इत्येताभ्यां परमेव अकारादि भवति । 'तं पूषाधत्त तेन' (तै· सं. 1. 5. 1) । 'सा रेतोधत्त' (तै· सं. 6. 5 6) एताभ्यामिति किम् ? 'सुम्ने मा धत' (तै सं. 1. 3. 12) । अवृणीत इति पदं वकारे परतः अकारादि भवति । 'युष्मानिन्द्रोवृणीत वृत्रतूर्ये' (तै. सं. 1. 1. 5) । व इति किम् ? 'मर्तो वृणीत सख्यम्' (तै· सं· 1. 2. 2) ॥ 80 ॥

---

72 *SL* V 17 '... अद्य....'
73 *SL* V 23 '... अबिभरुः....'
74 *SL* V 17 अध्वनः....'
75 *SL* V 17 '....अदत्त तत्....'
76 c. f. *SL* V 27 '... मेऽयक्ष्मम्....'
77 *SL* V 18 '....आ रेतोऽधत्त....'
78 c. f. *SL* V 35 '....इन्द्रोऽवृणीत,...'

अथ।स्त्विवता[79] वशीया[80] दा[81] दभूद[82] ष्ट्व[83] वहो[84] शयत्[85] ।
अस्कान्नोच्चा[86] द जन्य[87] क्रा[88] नयामा[89] याड[90] यानि तु ॥ 81 ॥
न स्वारवद[91] गन्मा[92] राध्य[93] रो[94] वर्ष्याम्य उत्तरम्[95] ।
अयुक्तश्चा[96] पथा[97] दभ्रि[98] रवारात्रिश्रुदक्ष्णया[99] ॥ 82 ॥

---

79 *SL* V 18 '....अधा इति....'
80 *SL* V 38 '....अशीय....'
81 *SL* V 17 '....अदात्...'
82 *SL* V 24 '....अभूत्....'
83 *SL* V 38 '....अष्टु....'
84 *SL* V 34 '....अवहः ...'
85 *SL* V 38 '....अशयत्....'
86 *SL* V 39 '....अस्कान्सह....'
87 *SL* V 14 '....अजान .'
88 *SL* V 10 '....अक्रान्....'
89 *SL* V 27 '....अयाम....'
90 *SL* V 28 '....अयाट्....'
91 *SL* V 28 '....अयानि नस्वारान्तः....'
92 *SL* V 12 '....अगन्म ...'
93 *SL* V 32 '....अराधि ...'
94 *SL* V 31 '....अरः....'
95 *SL* V 37 '....अवर्ष्याम्य श्च पाश्चात्यं '
96 c. f. *SL* V 28 '....व्योऽयुक्तः....'
97 *SL* V 21 '...अपप्तात्....'
98 *SL* V 25 '....अभ्रिः....'
99 *SL* V 11 '... अक्ष्णया....'

अधा इति पदम् इतिपरमेव अकारादि भवति। 'द्विर्मधा इति' (तै सं 2. 4. 12)। इताविति किम्? 'सुविते मा धाः' (तै. सं. 1. 2. 10) 'उपहवन्तेशीय' (तै. सं. 1. 6. 3) 'सहकुम्भ्यादात्' (तै. सं. 3. 2. 8) 'यन्म आत्मनो मिन्दाभूत्' (तै. सं. 3. 2. 5) 'मनस्त्याष्टु' (तै. सं. 1. 4. 2) 'यानावह उशतः' (तै सं. 1. 4. 44) 'गर्भ आशयत्' (तै. सं 3. 4. 2)। अस्कानिति पदमकारादि भवति उदात्तात्परं वर्जयित्वा। 'आ मा स्कान्त्सह' (तै. सं. 3. 1. 18)। नोच्चादिति किम्? 'अररुस्ते दिवम्मा स्कान्' (तै. सं. 1. 1. 9) 'शत्रुर्मेजनीति' (तै. सं. 2. 5. 2) 'आक्रान् वाजी' (तै. सं. 7. 5. 19) 'उपत्र आयामेति' (तै. सं 7. 4. 9) 'एनोयाट्' (तै. सं. 1. 4. 45)। अयानीत्येतत्पदमकारादि भवति स्वरितवत्पदं वर्जयित्वा। 'उप त्वायानीति' (तै. सं. 6. 7. 5)। न स्वारवदिति किम्? 'यास्ते अग्ने समिधो यानि' (तै सं. 5 7 4) 'आगन्म मित्रावरुणा' (तै. सं. 3. 5. 4) 'तदशकन्तन्मेराधि (तै. सं. 1. 6 6) 'मा भेर्मारो मा एषाम्' (तै. सं. 4 5 10)। मायोगेन निषिद्धत्वात् पुनरिदं प्रसूयते। अवर्ष्याभ्य इत्येतत्पदमुत्तरमकारादि भवति। 'वर्ष्याभ्यः स्वाहावर्ष्याभ्यः' (तै. सं. 7. 4. 13)। उत्तरमिति किम्? पल्वल्याभ्यः स्वाहा वर्ष्याभ्यः' (तै. सं. 7. 4. 13)। चकारः उत्तरमित्येतद्विशेषणमाकर्षति। अयुक्त इति पदमुत्तरमकारादि भवति' 'सव्योयुक्तोथ' (तै सं. 3 4. 10)। अन्वादेशेन किम्? 'दक्षिणो युक्तो भवति' (तै. सं 3. 4. 10) 'यज्ञस्यैवान्तं गत्वापथात्' (तै. सं. 7. 2. 8) 'सुषिराभिः (तै. सं. 5. 1. 1)। अवार अवि इत्येतयोः क्षुद्रग्रहणं सम्बध्यते। अविग्रहणेन अविशब्दोत्पन्नम् 'अव रक्षणे' इति धातूत्पन्नं च पदं गृह्यते। 'पार इक्ष्वोवार्येभ्यः'[100] (तै. सं. 7. 3. 16) 'पक्ष्मभ्यः स्वाहावार इक्षवः'[101] (तै. सं. 7. 3. 16) 'स कृष्णाविरभवत्'[102] (तै. सं. 2. 1. 2) 'योविं प्रतिगृह्णा—

---

100 *SL* V 36 '....अवार्येभ्यः....'

101 *SL* V 37 '... अवारे....'

ति'[103] (तै. सं. 2. 2 6) 'ते नोवन्तु'[104] (तै सं. 1. 2. 3) 'सदावन् भागम्[105] (तै. सं. 3. 5. 11) 'विश्वं ह्य पावति'[106] (तै. सं. 2. 6. 9) 'तभिर्नोविता भव'[107] (तै. सं 4 1. 11) इत्यादि। 'या वः शर्म शशमानाय सन्ति' (तै. सं 1. 5. 11) इत्यादि 'वो न' (प. प्र. 78) इति स्वरूपग्रहणाद् अकारादि न भवति। 'ऋतेनारभतेक्ष्णया (तै. सं. 6. 3. 6) ॥ 81, 82 ॥

रभ्योऽरथेभ्यो[108]ऽच्छिद्यमानया[109]नमित्र[110]मरिष्यति[111]।
अस्यान्त्य[112]भागा[113]न्यस्यस्वा[114]वाकया[115]रेणवो[116]ऽसिचत्[117]
॥ 83 ॥

---

102 *SL* V 37 '....अविः....'
103 *SL* V 36 '....अवि....'
104 *SL* V 33 '....अवन्तु....'
105 *SL* V 33 '....दाऽवन्....'
106 *SL* V 35 '....अवति....'
107 *SL* V 37 '—अविता....'
108 c. f *SL* V 31 '....अरथेभ्यः प्रथमं....'
109 *SL* V 14 '....अच्छिद्यमानया....'
110 *SL* V 19 '....अनमित्रं....'
111 *SL* V 32 '....अरिष्यति....'
112 *SL* V 40 '....अस्यन्ति....'
113 *SL* V 24 '....अभागानि....'
114 *SL* V 39 '....अस्यस्व...'
115 *SL* V 37 '....अवाकया....'
116 *SL* V 32 '....अरेणवः ...'
117 *SL* V 39 '... असिचत्....'

अरथेभ्य इत्येतत्पदं भ्य इत्यस्मात्परमकारादि भवति । 'रथिभ्यो-रथेभ्यश्च' (तै सं. 4. 5. 4) । भ्य इति किम् ? 'नमो रथेभ्यः' (तै· सं· 4 5. 4) 'अनश्वासो ये पवयोरथाः'[118] (तै. सं· 1. 6. ·2)इत्ये-तत् 'अरथा अर्चन्त्यन्तरस्याम् (तै प्रा. 7. 7) इत्यनेन व्यक्तम् । 'सी· व्यत्वपः सूच्योच्छिद्यमानया' (तै. सं 3. 3. 11) 'दीर्घायुत्वं च मेनमि-त्रम्' (तै· सं· 4. 7· 3) 'आर्तिमरिष्यतीति' (तै. सं· 2. 6. 6) 'स्त्रियं जातां परास्यन्ति' (तै. सं. 6. 5. 10) 'न वोभागानि' (तै सं. 2. ०. 3) 'स्रुचमास्यस्व' (तै. सं 2 5. 9) 'समुद्रस्य त्वावाकया' (तै. सं. 4. 6. 1) 'पूर्व्यासोरेणवः' (तै सं. 7. 5. 24) 'असिचत्सन्दु-ग्धम्' (तै. सं· 3 2. 8) ।। 83 ।।

अवस्यु[119]रवसेना[120]सन्नोच्च[121]मस्यामुदात्तवत्[122] ।<br>
अजस्रो[123]क्ष[124]न्नकूपारस्या[125]नशन्य[126]भितो[127]पसा[128] ।। 84 ।।

'स्वाहावस्युरसि' (तै· सं· 4. 7. 12) 'त्वयावसेन (तै. सं. 5. 7. 2) । अमदित्येतत्पदम् अकारादि भवत्युदात्तं वर्जयित्वा । 'सुदिना

---

118 *SL* V 32 '....अरथाः ...'
119 *SL* V 35 '....अवस्युः....'
120 *SL* V 35 '....अवसेन....'
121 *SL* V 39 '....असन्नोदात्तं....'
122 *SL* V 40 '....अस्यां निहतो न तु ..'
123 *SL* 15 '...अजस्रः....'
124 *SL* V 11 '... अक्षन्...'
125 *SL* V 10 '...अकूपारस्य....'
126 *SL* V 19 '....अनशनि....'
127 *SL* V 24 ' अभितः....'
128 *SL* V 22 ' अपसा....'

सासदिष्टिः' (तै. सं. 1. 2 14)। नोच्चमिति किम्? अभ्या सजज-जान' (तै· सं 4. 6. 2)। अस्यामित्येतत्पदमुदात्तवदकारादि भवति। 'इयं वै ध्रुवास्याम्' (तै. सं. 2. 6. 5)। उदात्तवदिति किम्? 'प्रव-दिता स्यामिति' (तै· सं. 7. 1. 10) 'हव्याजस्रोत्रक्षि' (तै. सं· 4. 3. 13) 'यथाक्षन्नापन्नम्' (तै· सं· 6. 1. 9) 'तेकूपारस्य' (तै. सं. 5. ०. 3) 'स्वाहानशन्यवस्फूर्जन्' (तै सं· 2. 4. 7) 'सौम्यो रा-जन्योऽभितः' (तै. सं. 2. 1. 2) 'कर्मणापसा' (तै. सं. 7. 1. 18) ॥ 84 ॥

अमृता[129]वृक[130]शब्दावृदुच्चानुच्चावनुष्ठुया[131]।
अनक्ति[132]रविभे[133]दप्रीणीता[134]यंवृत्रयज्ञियम्।
वा इन्द्रोपर्यसौ गौ स्वयजस्रीत्येवमादिषु[135] ॥ 85 ॥

अमृतम् अवृक इत्येतौ शब्दौ यथाक्रमम् ऋकारोदात्तानुदात्तौ अ-कारादी भवतः। 'यस्य छायामृतम्' (तै. सं. 4. 1. 8) 'मृत्योर्मुक्षीय मामृतात्' (तै. सं. 1. 8. 6) 'अतन्द्रासोवृकाः' (तै. सं. 1. 2. 14)

---

129 c. f *SL* V 7 '....अमृतशब्दो न यान्तकः'
130 c. f *SL* V 33 '... द्रासोऽवृकाः....'
131 *SL* V 18 '....अनुष्ठुया....'
132 c. f *SL* V 19 'अनक्ति च। अनक्तु च तथा....'
133 *SL* V 23 '....अविभेत्....'
134 *SL* V 23 '...अप्रीणीत....'
135 c f *SL* V 29, 30
'....अयमयज्ञो वा, अति, भूमिरिति त्रिषु।
निष्क्रीतो जायते शास्ते प्रजाभ्यो नस्तमस्त्वया॥
हृतो राज्ञे जहृषाणो राजाविन्नश्च मा मुचे।
गच्छते चिनुते स्वाहेत्येतेभ्यः परमव्ययम्॥'

'त्रायस्व नोवृकेभिः' (तै सं 1 6 12)। ऋदुच्चानुच्चाविति [किम्] ? 'नखानि [नि] कृन्तते मृता वै' (तै. सं. 6. 1. 1) 'यथा मृतायानुस्तरणीम्' (तै. सं. 6. 6. 7) 'मा त्वा वृका अघायवः' (तै. सं. 1. 2. 9) 'सत्यता तेनुष्ठुया' (तै. सं. 1. 2. 14)। अनक्तिधातूत्पन्नं पदमकारादि भवति। 'पथ आनक्ति' (तै. सं. 4. 1. ८) 'सविता मध्वानक्तु' (तै. सं. 1. 3. 6) 'सोसुरेभ्योबिभेत्' (तै. सं. 7. 3 7)। 'निष्ठानतान्तम्' (प. प्र. 77) इत्यनेन सिद्धेऽपि पुनर्ग्रहणं नियमार्थम्। एकारोपधमेव अकारादि भवति। तस्मात् तस्य गृहाद्धिहीना हरेत्' (तै. सं. 3. 1. 3) इत्यादिष्वकारादित्वं न भवति। 'आत्मानमाप्रीणीत' (तै. सं. 5. 1 8)। अयमित्येतत्पदं वृत्रादिषु परतः अकारादि भवति। 'त्वयायं वृत्रम्' (तै. सं. 1 7 7) 'निष्क्रीतोयं यज्ञियम्' (तै. सं. 3. 1. 4) 'स्वराज्ञोयं वा इन्द्रः' (तै. सं 2. 3. 6) 'राजायमिन्द्रः' (तै. सं 2. 3. 6) 'को मायमुपरि' (तै. सं. 5. 2. 10) 'आविन्नोयमसौ' (तै. सं. 1. 8. 12) 'आयं गौः' (तै. सं. 1. 6. 3) 'यन्त्वायं स्वधितिः' (तै. सं 1. 3. 5) 'उपहूतोयं यजमान इत्याह' (तै. सं. 2. 6. 7) 'आशास्तेयं यजमानोसौ' (तै. सं. 2. 6. 9) 'यो वै नोयं म्रियते' (तै. सं. 2. 4. 1) 'अच्छायमेति शवसा' (तै. सं. 4. 1. 8)। ह्रस्वपूर्वस्य ग्रहणं [अवासचस्वानुदामृदावर्धाशिक्षारक्षाद्याभवाभजायत्राचरापिवानाधामाधारयाधर्पाधावर्धयावोधात्रातत्रामुञ्चाश्वस्यापृणस्वाहिष्ठात्वंतरा] जनिष्ठायुङ्क्ष्वाच्छा' (तै. प्रा. 3. 8) इति ह्रस्वविधानसामर्थ्यात् व्यञ्जनादित्वशङ्का मा भूत्। एवमादिग्रहणं प्रपञ्चद्योतनार्थम्। तानि यथासंभवं परिभाषया बोद्धव्यानि ॥ 85 ॥

अ[136]हमस्था[137]न्यदोऽषाढा[138]द्ध्वर्यवो[139]ऽददता[140]यति[141] ।
अमेध्या[142]हरता[143]मस्त[144]महभूना[145]ऽसितो[146]ऽस्यथात्[147]॥86॥

---

136 *SL* V 41 '....अहं....'
137 *SL* V 40 '....अस्थानि....'

संपत्नी पत्याहं गच्छे' (तै· सं· 1. 1. 10) 'अङ्गानि च मेस्थानि च मे' (तै· सं. 4. 7 1)। अदःशब्दोत्पन्नमषाढशब्दोत्पन्नमध्वर्युशब्दोत्पन्नं च पदमकारादि भवति। 'यथासौ देवानाम्'[148] (तै· स. 5. 3 7) 'येदो रोचने' (तै. सं. 4. 2 8) प्रयुज्यन्तेमुमेव'[149] (तै· सं· 6. 5 11) 'स्वयमातृण्णामूमेव'[150] (तै सं 5. 3 7) 'यदाहवनीयेमुष्मिन्'[151] (तै सं 6. ·. 8) 'मामूरज'[152] (तै. सं. 4. 6. 6) 'आमुष्मादमुष्मै[153] (तै. सं. 2. 3. 1) 'स्वयमातृण्णामुष्यामेव'[154] (तै. सं. 5. 4. 7) 'आधीयतेमुष्मा आहवनीयः'[155] (तै सं· 6. 1. 8) 'देव-

---

138 *SL* V 38 '....अषाढा....'
139 *SL* V 8 '....अध्वर्युशब्दश्च....'
140 *SL* V 17 '....अददत....'
141 *SL* V 29 '....अयति....'
142 *SL* V 26 '....अमेध्या ...'
143 *SL* V 41 '....अहरतां....'
144 *SL* V 40 '....अस्तं....'
145 *SL* V 41 '....अहभून....'
146 *SL* V 39 '....असित;....'
147 *SL* V 38 '... असि ...'
148 *SL* V 39 '....असौ....'
149 *SL* V 25 '....अमुं...'
150 *SL* V 25 '....अमूं....'
151 *SL* V 25 '....अमुष्मिन्....'
152 *SL* V 25 '....अमूः....'
153 *SL* V 26 '....अमुष्मात्....'
154 *SL* V 26 '... अमुष्याम् ...'
155 *SL* V 26 '....अमुष्मै....'

ताषाढा नक्षत्रम्' (तै. सं. 4. 4 10) 'नास्ऽस्थिते सोमेऽध्वर्युः' (तै. सं. 6. 3. 1) 'अश्विनाध्वर्यू' (तै. सं. 4. 3. 4) इत्यादि । 'राष्ट्रमाददत' (तै. सं. 7. 5 9) 'पुनस्ते प्राण आयति' (तै. सं. 1. 3. 14) 'एषालोमकामेध्या' (तै. सं. 2. 6. 5) 'तमाऽरतान्तेन' (तै सं. 7 1. 4) 'देवेभ्यः कर्म कृत्वास्तम्' (तै. सं. 1. 8. 3) 'वातोऽभूनः' (तै. सं. 4 3. 3) 'मृत्यवेसितः' (तै. सं. 5. 5. 14) 'वृत्रस्य कनीनिकासि' (तै. सं. 1 2. 1) ॥ 'गाहमानोदायः'[156] (तै. सं. 4. 6. 4) 'जायमानोह्.नाम्' (तै. सं. 2. 4. 14) 'भद्र शोचेपूपम्'[157] (तै. सं. 4. 2. 2) 'सुमन्मेधायि'[158] (तै. सं. 4. 6 8) इत्यादीनि अभ्यावर्तिन्नपूपम् [अपिदधाम्यद्यन्वदितिशर्माग्नेर्जिह्वामग्नयः पप्रयोऽस्माकमस्मेधत्ताश्माश्वा श्रुतिरायामामर्यमन्नस्मत्पाशानस्मिन्यज्ञेऽस्ताव्यथमानाभिद्रोहमधाटयदोऽथोऽदुग्धा अरिष्टा अरथा अर्चन्त्यन्तरस्यामत्रस्थान्नायाङ्गिरस्वदकरम्]' (तै. प्रा. 12 7) इति प्रातिशाख्येन व्यक्तानि । 'चन्द्रमा धाताष्टौ'[159] (तै. सं. 3. 4. 9) 'ततो वै तेसुराणाम्[160] (तै. सं. 0. 6. 11) 'स्वाहाक्षीभ्याम्'[161] (तै. सं. 7. 3. 16) इत्यादीनि बहून्युदाहरणानि प्रसिद्धत्वात् परिभाषयैव सिद्धानि इति अत्र नोच्यन्ते । अथेत्ययमधिकारः । अवर्णात्परः पदाभिभूतः आकारो विकारः (? री) स्पष्टमुच्यते इति । आद् इत्यय प्रथमान्तः न पञ्चम्यन्तः । आकार इत्यर्थः । 'अथावर्णात्' (प. प्र. 73) इत्ययमधिकारोऽत्राप्यनुवर्तते ॥ 86 ॥

---

156 *SL* V 17 '....अदायः....'

157 *SL* V *22* '....अपूपं....'

158 *SL* V 18 '....अधायि....'

159 *SL* V 6 '....अष्ट....श्रुतिः....'

160 *SL* V *6* '....असुर....श्रुतिः ....'

161 *SL* V 12 '....अक्षीभ्यां....'

आयुध[1] युश्रु[2] तावात्म श्रुतिर्नोरस[3] आशिरम् ।[4]
आप्नोतिश्रुन्न तूच्चान्तमप्तु[5] मायतन श्रुतिः[6] ॥ 87 ॥

आयुश्रुदिति सन्धिसामर्थ्याद् अजन्तं हलन्तं च गृह्यते । आयुधशब्दोंत्पन्न [मायुशब्दोत्पन्न] मायुश्शब्दोत्पन्न च पदमाकारादि भवति । 'यज्ञो वै यज्ञायुधानि' (तै. सं. 1. ७. 8) 'शतायुधाय' (तै. सं. 5. 7. 2) 'यत्रायुधम्'(तै. सं. 4. 6. 6) 'विश्वतो वृद्धायुम्' (तै सं. 1. 3. 1) 'अग्नेदब्धायो' (तै. सं. 1. 1. 13) 'उपायत्रस्थ' (तै. सं. 1. 1. 1) 'अयंमायुरिन्द्रः' (तै. सं. 4. 6. 8) 'ब्रह्मायुष्मन्' (तै. सं. 2. 3. 10) 'पुनरग्न इषायुषा' (तै. सं. 1. 5. 3) । 'उत्तरतोघायुः' (तै सं. 5. 7. 3) 'ऋतायवः पुरान्नम्' (तै. सं 1. 2. 5) 'मा त्वावृका अघायवः' (तै. सं. 1. 2. 9) इत्येतेषु पदेषु 'देवाशीका [सुम्नाश्वर्तावायुनाहृदया–घोक्थाशुद्धा]' (तै. प्रा. 3. 2) इत्यादिना आकारादित्वं न भवति । आत्मशब्दोत्पन्नं पदमाकारादि भवति उरःशब्दात्परं वर्जयित्वा । 'सात्मानमेवाग्निम्' (तै सं. 6. 1. 5) 'सँस्कृत्यात्मनाभ्यारोहति' (तै. सं. 5. 6. 6) इत्यादि । नोरसः इति किम् ? 'समीची उरसा त्मना' (तै. सं. 4. 1. 3) । 'साशिरमेवैनम्' (तै. सं. 6. 1. 6) 'इन्द्रायाशिरम्' (तै. सं. 3. 2. 8) । आप्नोति धातूत्पन्नं पदमाकारादि भवति उदात्तामप्तुमि–त्येतत्पदं वर्जयित्वा । 'यदा सहस्रं पशून् प्राप्नुयात्' (तै. सं. 2. 1. 5) 'सम्प्राप्य न्यवर्तत' (तै. सं 6. 1. 6) 'तेन नाप्नुवन्' (तै. सं.

---

1 *SL* VI 1 '....आयुधश्रुतिः...'
2 c. f. *SL* VI 2 '....आयुश्शब्दो न घात्परः ।' Also vide *SL* VI 13 '....आयु....'
3 *SL* VI 2 '....आत्मशब्दो नोरसादिः....'
4 *SL* VI 28 '....आशिरम्....'
5 c. f *SL* VI 1 '....आप्नोति....श्रुतिः....'
6 c. f. *SL* VI 3 '....आयतन....शब्दो नापूर्वको नतु ।'

7. 4. 4) 'न परां प्राप्नोति' (तै. सं. 2. 5. 4) 'होतानाप्तस्यापयिता' (तै. सं. 7. 1. 5) 'आपन्त्वाग्ने मनसापम्' (तै. सं. 5. 5. 2) इत्यादि। न तूच्चान्तमप्तुमिति किम्? 'न हीमे यजुषाप्तुम्' (तै. सं. 5. 2. 7) 'पशून् प्राप्तुमित्याहुः' (तै. सं. 2. 1. 5)। आप्तुमिति किम्? 'तेषामेवेंषाप्ता' (तै. सं. 3. 4. 3) 'अहोरात्राण्येवाप्त्वेष्टकाः' (तै. सं. 3. 4. 10)। आयतनशब्दोत्पन्नं पदमाकारादि भवति। 'यथायतनं वा एतेषाम्' (तै. सं. .. 5. 6) 'यथायतनादेव' (तै. सं. 7. 5. 6) 'सायतनमेवैनम्' (तै. सं. 5. 1. 2) 'स्व एवायतने देवताः' (तै. सं. 1. 6. 7)। 'अनायतना हि तस्मादाहुः' (तै. सं. 7. 1. 5) इत्यत्र 'विदानलिम्पयतन' (प. प्र. 30) इति ग्रहणात् सामर्थ्यात् 'स्व एवास्मा आयतन इन्द्रियम्' (तै. सं. 5. 4. 11) इत्यत्र 'यजने यतने यत्ते' (प. प्र. 56) इति ग्रहणाच्च आकारादित्वं न भवति। तत्साम्यात् सर्वत्र आयतनानायतनशब्दयोरिङ्गयोरुत्तरांशस्य आकारादित्व न भवतीति गम्यते। 'ऐन्द्रवायवस्य वा एतदा यतनम्' (तै. सं. 7. 2. 8) 'अनायतना अन्याः' (तै. सं. 3. 1. 9) इत्यादिषु आकारादित्व न भवति ॥ 87 ॥

आदित्यश्रुदनाद्युच्च[7] माज्या[8] श्वाग्रयण[9] श्रुतः।
आरा[10] दायन्न[11] थाञ्जीता[12] हवनीया[13] हुति[14] श्रुती ॥ 88 ॥

---

7 c. f *SL* VI 2 '....अन्तोदात्तो निहतो वाप्यादित्यश्रुतिरिष्यते।'
8 *SL* VI 1 '....आज्य....श्रुतिः....'
9 *SL* VI 1 '....आग्रयण....श्रुतिः ...'
10 *SL* VI 16 '....आराद्....'
11 c. f *SL* VI 13 '....उपायन्....'
12 *SL* VI 7 '....अञ्जीत....'
13 *SL* VI 1 '....आहवनीय ...श्रुतिः....'
14 *SL* VI 3 '....आहुति ...शब्दौ नापूर्वको न तु।'

आदित्यशब्दोत्पन्नं पदमाद्युदात्तं वर्जयित्वा अकारादि भवति। 'इन्द्राय त्वादित्यवते' (तै. सं. 1. 4. 1) 'येनादित्या वसवः' (तै. सं. 5. 7. 2) सादित्येभ्य एव' (तै. सं. 6. 5 6) 'दक्षिणादित्याम्मल्हाम्' (तै. सं. 1. 8. 29) 'तुरीयादित्यसवनम्' (तै. सं. 1. 4. 22) 'ऋतेनादित्या महि वः' (तै. सं. 2. 1. 11) इत्यादि। अनाद्युच्चमिति किम् ? 'प्रति त्वादित्याः' (तै. सं. 1. 1. 5)। आज्यशब्दोत्पन्नमाशुशब्दोत्पन्नमाग्रयणशब्दोत्प [न्नं] च पदमकारादि भवति। 'ऋचमनूच्याज्यभागस्य' (तै. सं. 2. 6 2) 'आज्यस्याज्यमसि' (तै. सं. 1. 6. 1) 'आशुषेणाय चाशुरथाय च'[15] (तै. सं 4. 5. 6) 'गिराशुञ्चयन्तम्'[16] (तै. सं. 1. 4. 9) 'आग्रयणस्याग्रयणत्वम्' (तै. सं. 6. 4. 11) 'साग्रयणं प्रत्यागच्छत्' (तै. सं. 6. 4. 11) 'पोषाय त्वाराद्घोषाय त्वा (तै. सं. 7. 5. 13) 'मनसारादजानाम्' (तै. सं. 4. 6. 7) 'द्वाभ्याञ्चतीभ्यामुपायन्' (तै. सं. 5. 7. 5) 'असुराणां वैश्यमुपायन्' (तै. सं 2. 3. 7)। अथेत्ययमधिकारः। आञ्जीतेत्याद्यवग्रह आकार उच्यत इति। उत्तरांशेन सह ग्रहणं व्यक्तयर्थम्। 'यदपतूलयाञ्जीत' (तै सं 6. 1. 1)। आहवनीयशब्दोत्पन्नमाहुतिशब्दोत्पन्नं च पदमाकारादि भवति। 'तत्वष्टाहवनीयम्' (तै. सं 2. 4. 11) 'सत्रस्यर्ध्याहवनीयस्य' (तै. सं. 7. 5. 8) 'अदाभ्या वै नामैषाहुतिः' (तै. सं. 5. 7. 4) 'सौम्ययैवाहुत्या' (तै. सं. 2. 4. 9) ॥ 88 ॥

आकूताकूत्यलब्धाशी[17] राधिश्रुतय आयतीम्[18]।
स्यादाकाल[19] आक्रमण[20] माक्रन्दयत[21] आगमन्[22] ॥ 89 ॥

---

15 *SL* VI 20 '....आशुरथाय....'

16 *SL* VI 19 '....आशु....'

17 *SL* VI 1 '...आशी....श्रुतिः....'

18 *SL* VI 13 '....आयतीः....'

19 c. f *SL* VI 4 '....इष्टिष्वाकाले ...'

आकूतादिशब्दोत्पन्नं पदमाकारादि भवति। 'चित्तिश्चाकूतञ्चाकूतिश्च'[23] (तै. सं. 3. 4. 4) स्वाहेत्याहाकूत्या हि'[24] (तै. सं. 6. 1. 2) 'तन्नेवालब्धम्'[25] (तै. सं. 6. 3. 5) 'उपाकृताय स्वाहालब्धाय'[26] (तै सं 5. 7. 20) 'सत्याशीरित्याह सत्यामेवाशिषम्' (तै. सं. 2. 3. 1) 'स्वाहाधिमाधीताय'[27] (तै. सं 7. 3. 15) 'तस्याधयोप्सरसः[28] (तै. सं 3. 4. 7) 'प्रतिधेनुमिवायतीम्' (तै. सं. 4 4. 4)। स्य इत्यस्मेत्परमाकाल इति पदमाकारादि भवति। 'प्रातःसवनस्याकाले' (तै. सं. 2. 2. 9)। स्यादिति किम्? 'आप्त्वा काल आगते' (तै सं. 5 5. 1)। ऐन्द्रियर्चाक्रमणम्' (तै. सं. 5. 5. 7) 'उच्चैर्घोषायाक्रन्दयते' (तै. सं. 4. 5. 2) 'यथा देवा इहागमन्' (तै. सं 5 5. 4)॥ 89॥

आदाया[29] क्रम्या[30] गमिष्ठा[31] आश्रेषा[32] आतताविने[33]।
आसन्ना[34]लाद्या[35]हनन्याया[36]हुतारभ्य[37]वल्गते[38]॥ 90॥

---

20 *SL* VI 5 '....आक्रमणं....'
21 *SL* VI 5 '....आक्रन्दयते....'
22 *SL* VI 5 '....आगमन्....'
23 *SL* VI 5 '....आकूतं....'
24 *SL* VI 4 '.. आकूत्या....'
25 *SL* VI 16 '....आलब्धं....'
26 *SL* VI 16 '....आलब्धाय....'
27 *SL* VI 9 '.. आधि....'
28 *SL* VI 9 '....आधयः....'
29 *SL* VI 9 '....आदाय....'
30 *SL* VI 5 '....आक्रम्या ..'
31 *SL* VI 6 '....आगमिष्ठाः....'
32 *SL* VI 19 '....आश्रेषाः....'

'सङ्गृह्यादाय' (तै· सं. 2. 4. 3) 'तस्मान्नाक्रम्यापुरुषशीर्षम्' (तै. सं. 5 6. 6) 'पित्वस्त इहागमिष्ठाः' (तै. सं 2. 6. 12) 'देवताश्लेषा नक्षत्रम्' (तै. सं. 4. 4. 10) 'नमो रुद्रायातत विने' (तै. सं. 4. 5. 2)। य इति प्रत्येकमभिसम्बध्यते। 'हव्यायैवासन्नाय' (तै· सं· 6. 2. 1) 'आतायियि चालाद्याय च' (तै. सं. 4 5 8) 'दुन्दुभ्याय चाहनन्याय च' (तै. सं. 4. 5. 7) 'अग्ने घृतेनाहुत' (तै. सं. 4. 6. 3)। आरभ्यवल्गते इत्यस्यैवं विग्रहः—आरभ्य आरभ्यते आवल्गते इति। 'यज्ञमेवारभ्य प्रतनुते' (तै· सं 3 5 1) 'यो मेधायारभ्यते' (तै· सं. 6. ३. 6) 'आपलायिताय स्वाहावल्गते' (तै सं. 7. 1. 13) ॥ 90 ॥

स्यादापलायितायो[39]र्ध्वमायते तत्समीपगम्[40] ।

उत्तरमापलयितायेति पदमाकारादि भवति। 'पलयिताय स्वाहापलायिताय' (तै. सं. 7. 1. 13) 'परावल्गते स्वाहायते' (तै· सं. 7. 1. 13)। ऊर्ध्वन्तत्समीपगं चेति किम्? 'शूकृताय स्वाहा पलयिताय' (तै सं 7. 1. 13) 'उद्द्रञ्चते स्वाहा यते (तै. सं. 7. 4. 22) ॥

आश्राव्या[41]दहना[42]विद्धा[43]विष्टित[44] त्वाङ्क्त उच्चवत् ।
आविवेश तथा[45]वृत्या[46]आहरन्ति न दीर्घतः[47] ॥ 91 ॥

---

33 *SL* VI 8 '....आततताविने....'

34 *SL* VI 22 '....आसन्नाय....'

35 *SL* VI 16 '....आलाद्याय....'

36 *SL* VI 23 '....आहनन्याय....'

37 *SL* VI 15 '....आरभ्यते....'

38 c. f *SL* VI 17 '....पूर्वावल्गते....'

39 *SL* VI 11 '....आपलायिताय चोत्तरम्।'

40 c. f *SL* VI 14 '....सिताय सूयः पृथिव्या इत्येतेषु न चायते।'

41 *SL* VI 19 '....आश्राव्यं....'

अमित्येषा विभक्तिराश्राव्यादिभिश्चतुर्भिः प्रत्येकमभिसम्बध्यते । 'तस्मादन्वारम्याश्राव्यम्' (तै॰ सं ७. 1. 2) 'यज्ञवेशसं वादहनं वा' (तै. सं॰ 3. 4. 10) 'यथाविद्धं निष्कृन्तति' (तै॰ सं 2. 3 13) 'ऊष्णीषेणाविष्टितम् (तै॰ सं. ७. 4 1) । आङ्क्त इत्येतत्पदमुदात्तवदा-कारादि भवति । 'तदाञ्जनमभवद्यदाङ्क्ते' (त. सं. 6. 1. 1) । उच्च-वदिति किम् ? 'दक्षिणं पूर्वमाङ्क्त' (तै सं॰ 6. 1. 1) । अविवेश इत्ये-तत्पदं तथाशब्दाकृष्टमुदात्तवदाकारादि भवति । 'यो रुद्रो विश्वा भुव-नाविवेश' (तै. सं. 5. 5. 8) । तथेति किम् ? 'अग्नेरनीकमप आ वि-वेश' (तै सं. 1. 4. 45) 'अचिकेत्वित्याहावृत्यै' (तै॰ सं 6. 1. 8)। आहरन्तीत्येतत्पदं दीर्घात्परं वर्जयित्वा आकारादि भवति । 'यस्मै वा अल्पेनाहरन्ति' (तै. सं॰ 2. 5. 4) । न दीर्घत इति किम् ? 'यत्र खलु वा एतं शीर्ष्णा हरन्ति' (तै सं. 6. 1. 9) ।। 91 ।।

आतञ्चया[48]दाव्रश्चना[49]दास्थाता[50] चास्ताव[51] आवृतम् ।
स्वाहाद्ब्रूयां तपतिराघारये[52]दासादयत्यपि[53] ।।
आश्रावये[54]दालभत[55] आलभेतेति[56] पञ्चकम् ।
नोपसर्गादायतया[57]गच्छेदा[58]घारम[59]प्यथा ।। 92 ।।

---

42 *SL* VI 9 '...आदहनं....'
43 *SL* VI 17 '....आविद्धं....'
44 *SL* VI 18 '....आविष्टितं....'
45 *SL* VI 18 '....आविवेशाप्युदात्तवान्....'
46 *SL* VI 18 '....आवृत्यै....'
47 *SL* VI 23 '....अल्पेनाद्याहरन्ति स्यात्....'
48 *SL* VI 7 '....आतञ्च्यात्च....'
49 *SL* VI 17 '....आव्रश्चनात्....'
50 *SL* VI 22 '....आस्थाता....'
51 *SL* VI 22 '....आस्तावः....'

'पर्णवल्कैर्वातिञ्च्यात्' (तै. सं. 2. 5. 3) 'यो वाव्रश्चनाग्निर्यपति' (तै. सं. 2. 5. 1) 'पीडयस्वास्थाता ते' (तै. सं. 4. 6. 6) 'उपास्ताव: कलश:' (तै. सं. 3. 2. 4) 'तस्यैवावृतमनु' (तै. सं. 1. 7. 6)। स्वाहेत्येतस्मादाकाराच्च परं तपतिधातूत्पन्नं पदमाकारादि भवति। 'स्वाहातपति वर्षन्'[60] (तै. सं. 2. 4. 7) 'स्वाहातप्स्यते'[61] (तै. सं. 7. 5. 11) 'स्वाहातपते'[62] (तै. सं. 7. 5. 11) 'शीताय स्वाहातपाय'[63] (तै. सं. 7. 1. 17) 'छायायै वातपतश्च'[64] (तै. सं. 6. ५. 2) इत्यादि। स्वाहाद्भ्यामिति किम्? 'एकाष्टका तपसा तप्यमाना' (तै. सं. 4. 3. 11)। आधारयेदित्यादिपञ्चकमुपसर्गात्परं वर्जयित्वा अकारादि भवति। अपिशब्द: पादपूरणार्थ:। 'यदेकयाघारयेदेकाम्' (तै. सं. 2. 5. 11) 'प्रोक्षणीश्चासादयति' (तै. सं. 1. 6. 9) 'अनन्वारभ्याश्रावयेत' (तै. सं. 3. 1. 2) 'यज्ञमुखमेव पूर्वीयालभते' (तै. सं. 2. 5. 5) 'यत्पशून्नालभेन' (तै. सं. 5. 1. 8)। नोपसर्गादिति किम्? 'जिह्मन्तस्या घारयेत्' (तै. सं. 2. 5. 11) 'वारु-

52 c. f *SL* VI 7 '....सोच्चमाघारयेत्....'

53 c. f *SL* VI 22 '....आसादयति-चोदात्त....'

54 c. f *SL* VI 19 '....आश्रावयेदप्युदात्तवान्।'

55, 56 c. f *SL* VI 16 '....आलभेताप्यालभतेप्येतौ सोद्यत्तकौ तथा।'

57 *SL* VI 14 '....आयतया....'

58 *SL* VI 6 '....आगच्छेत्....'

59 *SL* VI 6 '....आधारं....'

60 *SL* VI 7 '....आतपति....'

61 *SL* VI 8 '....आतपस्यते....'

62 *SL* VI 8 '....आतपते....'

63 *SL* VI 8 '....आतपाय....'

64 *SL* VI 8 '....आतपत:....'

ण्यर्चा सादयति' (तै. सं. 6.1. 11) 'तत्तिष्ठन्नाश्रावयेत्' (तै. सं. 3. 1. 2) 'वज्रेणैवैनं वशेकृत्वा लभते' (तै. सं. 6. 3. 7) 'उत्तरमर्धर्चमा लभेत' (तै सं 2. 5. 7) 'यथायतया समृच्छते' (तै. सं. 3. 2. 9) 'मृगाखरे यदि नागच्छेत्' (तै. सं. 7 5. 21) 'ध्रुवाधारमाधार्य' (तै. सं. 2. 5. 1 ) अपिशब्दोऽनुक्तसमुच्चयार्थः। 'इयं यका शकुन्तिकाहलम्'[65] (तै. सं. 7. 4. 19) इत्येतत् ब्राह्मणेनैव व्यक्तम्। 'अन्तरिक्षमिवाग्नीध्रम्'[66] (तै. सं. 5 4. 6) 'दक्षिणाग्नावैष्णवम्'[67] (तै. सं. 1. 8 8) 'हन्तानुष्टुभं छन्दः'[68] (तै. सं. 4. 2. 1) इत्यादीनि परिभाषया सिद्धानीति अत्र नोच्यन्ते। अथेत्ययमधिकारः। ह्रस्वादित्यादिना उत्तरांशस्यादिभूत आकार उच्यत इति ॥ 92 ॥

ह्रस्वादाहुति[69]राव्याध[70] उपादावर्ततिश्रुतिः[71] ।
आकारोति[72]श्रुदागामा[73]गुरा[74] गह्या[75]खरा[76]सते[77] ॥ 93 ॥

---

65 *SL* VI 23 '....आहलं....'
66 *SL* VI 1 '....आग्नीध्र ...श्रुतिः....'
67 *SL* VI 1 '....आग्नीध्र .. श्रुति....'
68 *SL* VI 1 '.. अनुष्टुभवाक् ...'
69 *SL* VI 3 '....आहुति... शब्दौ नापूर्वकौ न तु।'
70 *SL* VI 18 '....आव्याध....'
71 c. f *SL* VI 1 '....उपावर्त....श्रुतिः....'
72 c.f *SL* VI 4 '....उपाकुर्यादपोपादि चाकारोति....'
73 c. f. *SL* VI 6 '....आगामथेङ्ग्यम् ...'
74 c. f *SL* II 6 '....उपागुः....'
75 c. f *SL* VI 6 '....उपागहि...'
76 *SL* VI 5 '....आखरे....'
77 c. f. *SL* VI 21 '....त्वापरं नासते....'

ह्रस्वादित्ययमधिकारः 'आकृताय' (प. प्र. 95) इत्येवमन्तम् अवर्णादित्यस्य विशेषणरूपेणानुवर्तते। ह्रस्वादवर्णात्प[र] माहुतिरित्यादि-पदमाकारादि भवति। 'पुरुषाहुतिर्ह्यस्य' (तै. सं 2. 2. 2) 'घृताहवन इत्याह घृताहुतिर्ह्यस्य' (तै. सं.2. 5. 9)। ह्रस्वादिति किम् ? 'अनाहुतिर्वै जर्तिलाश्च' (तै. सं. 5. 4. 3) 'चनोपाघ्याधो भवति' (तै. सं. 2 2. 9)। उप इत्येतस्मात्परं वर्ततिधातूत्पन्नं पदमाकारादि भवति। 'प्रजापतिं पशव उपावर्तन्त' (तै. सं. 2 4 4) 'यं वा इमे उपावर्त्स्यतः' (तै. सं. 6. 1. 3) 'उत्तरवेदिरुपाववर्ति'[78] (तै. सं. 6. 2. 7) 'सहस्रन्त उपावृतः' (तै. सं. 4 2 1)। अन्यथापि सिद्धे उपादित्येकग्रहणं 'अथ दीर्घत आवृतः' (प. प्र. 95) इत्युत्तरत्र वक्ष्यति। लाक्षणिककण्ठोक्तयोः कण्ठोक्तस्यैव बलीयस्त्वात् 'सहस्रन्त उपावृतः' (तै. सं. 4. 2 1) इत्यत्र आकारादित्वं न भवति इत्येतत्सिध्यर्थम्। करोतिधातूत्पन्नं पदमाकारादि भवति। 'प्रातरनुवाकमुपाकुर्यात्' (तै. सं. 7. 5. 5) 'यद्वप्सानपाकरोति' (तै. सं. 2. 5. ) 'प्रातरनुवाकमुपाकरोति' (तै सं. 6. 4. 3) 'उपाकृताय स्वाहा'[79] (तै. सं. 0. 7. 20) 'उपाकृत श्मशानम्'[80] (तै. सं. 3. 1. 4) 'एतद्वै सर्वमध्वर्युरुपाकुर्वन्'[81] (तै. सं. 3. 3. 2) ['जनयन्नुपागाम्' (तै. सं. 5. 7. 2)][82] 'उपमामुपागुः' (तै. सं 4 7. 15) 'सुमना उपागहि' (तै. सं. 3. 3. 11)। आखरासत इति। आखरे आसते इत्यर्थः। 'मृगाखरे यदि' (तै. सं. 7. 5 21) 'मांसभिक्षामुपासते' (तै सं. 4. 6. 9) ॥ 93 ।

---

78 *SL* VI 18 '....आववर्ति ....'

79 *SL* VI 4 '.. आकृताय ...'

80 *SL* VI 4 '....आकृतं....'

81 *SL* VI 4 '....आकुर्वन्....'

82 No gap in Ms. Added by the editor.

आतङ्क्या[83]शीर्कमाङन्तमाधा[84]नाहावमा[85]चितम्[86] ।
आवापस्य[87] हव्याहवन[88] आदाना[89] आग्निमारुते[90] ॥ 94 ॥

आङन्तं तृतीयान्तमित्यर्थः । आतङ्कच्याशीर्कम् आतङ्कचमाशीर्क-मित्यर्थः । तृतीयान्तमातङ्कचमाशीर्कं च आकारादि भवति । 'शृतातङ्क्येन' (तै. सं. 5. 2. 9) 'साशीर्केण' (तै. सं. 1. 6. 10) । तृतीयान्तमिति विशेषणं स्वरूपनिर्देशार्थम् । आधानाहावम्—आधानम् आहावम् इत्यर्थः । अग्नेस्तूपाधानम्' (तै. सं 6. 1. 1) । 'निष्कृताहावमवटम्' (तै. सं. 4. 2 6) 'स्थूरि यवाचितम्' (तै. सं. 1. 8. 18) 'गावीधुकञ्चरुमक्षावापस्य' (तै. सं. 1. 8. 9) 'घृताहवन इत्याह' (तै. सं. 2. 5. 9) 'हस्तादाना: पुरुषो हस्ती' '(तै. सं 6. 4. 5) 'वैश्वदेवाग्निमारुते' (तै. सं. 4. 4. 2) ॥ 94 ॥

आयन्त्या[91]वीत[92]माकूतायाथ[93] दीर्घत आवृत:[94] ।
आहा[95]यामुष्यायणस्या[96]शाना[97]माद्रार्तिवार्तिवाक् ॥ 95 ॥

---

83 *SL* VI 8 '....आतङ्क्येन....'
84 *SL* VI 10 '....आधानं ...'
85 *SL* VI 22 '....आहावं....'
86 c. f *SL* VI 7'....इंग्येऽप्याचितं ...'
87 *SL* VI 18 '....आवापस्य....'
88 *SL* VI 22 '....आहवन:....'
89 *SL* VI 9 '....आदाना:....'
90 *SL* VI 6 '...आग्निमारुते....'
91 c. f. *SL* VI 13 '... उपायन्ति ...'
92 *SL* VI 17 '....आवीतं ...'
93 *SL* VI 5 '....आकूताय ...'
94 *SL* VI 17 '....आवृत:....'

'नमस्यन्त उपायन्ति' (तै॰ सं. 6. 6 3) 'प्राचीनावीतं पितृणाम्' (तै. सं. 2. 5 11) 'यत्राकूताय मनुष्यरथः' (तै॰ सं.5. 4 10)। अथेत्ययमधिकारः। दीर्घात्परः उत्तरांशस्यादिभूतः आकार उच्यत इति। 'तस्माद्दक्षिणावृतो मासाः' (तै सं 5. 3 2) 'यद्ब्राह्मणं पराह' (तै॰ सं॰ 2. 5. 1.)। अथेत्ययमधिकारः। इत उत्तरम् आकारादीन्यखण्ड-पदान्युच्यन्त इति। ह्रस्वाद्दीर्घत इति विशेषणद्वयं निवृत्तम्। अवर्गा-दित्ययं सामान्याधिकारोऽनुवर्तते। 'इदमहममुष्यामुष्यायणस्य' (तै. सं. 3. 4. 8) 'उपस्थाशानां मित्रवत्' (तै. सं. 4. 4. 12)। आर्द्रादि-भिर्वाक्शब्दः प्रत्येकमभिसम्बध्यते। 'सोमो देवतार्द्रा नक्षत्रम्'[98] (तै. सं. 4. 4. 10) 'शुष्कस्य चार्द्रस्य च'[99] (तै सं॰ 6. 4. 1) 'ऋतवो सृज्य-न्तार्तवोधिपतिः'[100] (तै सं 4 3 10) 'पञ्चर्तुष्वेवार्तवेषु'[101] (तै. सं. 7. 2. 6) नार्तिमार्च्छति'[102] (तै. सं. 1. 5. 2) 'यो यजस्यार्त्या'[103] (तै॰ सं॰ 2. 6. 6)॥ 95॥

अन्तोदात्तश्विना[104]रण्या[105]सुरवागाविराममत्[106]।
आम्वाना[107]माहु[108]राद्यास्यश्रुतिस्वारान्तमाग[109] आत्[110] ॥96॥

---

95 c.f *SL* VI 23 '....परा....आहैतत्पूर्व....'
96 *SL* VI 1 '...आमुष्यायणश्रूतिः....'
97 *SL* VI 19 '... आशानां....'
98 *SL* VI 17 '....आर्द्रा....'
99 *SL* VI 17 '....आर्द्रस्य....'
100 *SL* VI 14 '....आर्तवः....'
101 *SL* VI 17 '....आर्तवेषु....'
102 *SL* VI 17 '....आर्ति....'
103 *SL* VI 17 '....आर्त्या....'
104, 105 *SL* VI 3
'आश्विनारण्यशब्दौ चात्यन्तोदात्तश्रुतौ श्रुतिः।'

आश्विनादिभिर्वाक्शब्दः प्रत्येकमभिसम्बध्यते। आश्विनादिशब्दोत्पन्नं पदमन्तोदात्तमाकारादि भवति। 'दक्षिणाश्विनं द्विकपालम्' (तै. सं. 1. 8. ७) 'यस्याश्विने शास्यमाने' (तै. सं. 2. 1. 10) 'नारण्यान्' (तै. सं. 5. 2. 9) 'नारण्येषु' (तै. सं. 5. 4. 4) 'एतदुर्वै नामासुरः'[111] (तै. सं. 2. 6. 9) 'एतदुमेवासुरम्'[112] (तै. सं. 2. 6 9)। अन्तोदात्तेति किम्? 'सुशेवाश्विनाध्वर्यू' (तै. सं. 4 3 4) 'पुरुत्रारण्येषु' (तै. सं. 4. 6. 7) 'अथासुरा यज्ञमजिघांसन्' (तै. सं 2. 6. 1)। आविरित्यविधातूत्पन्नं पदं प्रादुःशब्दपर्यायरूपं च पदं गृह्यते। पूर्वत्र 'आवाराविश्रुत् (प. प्र. 82) इति अविशब्देन दीर्घपूर्वविषयस्यावष्टब्धत्वात् ह्रस्वपूर्वविषय एवायं विधिरवतिष्ठते। 'तिष्णुर्यद्धावत्' (तै. सं. 4. 1. 11) 'सूर्यो नाविर्भवति' (तै. सं. 2. 1. 10)। 'स्वध्वरावानो देव्या' (तै. सं. 4. 1. 4) इत्यत्र 'अवासचस्व....' (तै. प्रा. 3. 8) इति ग्रहणसामर्थ्यात् आकारादित्वं न भवति। किं बहुना, 'आवम्' (तै. सं. 2. 5. 6) इत्येकमेवोदाहरणम्। 'किञ्चनाममत्' (तै. सं. 4. 5. 10) 'सत्यायाम्नानाम्' (तै. सं. 1. 8. 10) 'रसया सहाहुः' (तै. सं. 4. 1. 8)। आद्यास्याभ्यां श्रुतिग्रहणं सम्बध्यते। आद्यशब्दोत्पन्नं पदम् आस्यशब्दोत्पन्नं पदं च स्वरितान्तमाकारादि भवति। स्वरितान्तमिति पदापेक्षया नपुंसकत्वम् 'नाद्या प्रजापतेः'[113] (तै. सं. 6. 4. 10)

---

106 *SL* VI 12 '....आममत्....'

107 *SL* VI 12 '....आम्नानाम्....'

108 *SL* VI 23 '....आहुः....'

109 *SL* VI 6 '....आगः....'

110 *SL* VI 8 '....आत्....'

111 *SL* VI 20 '....आसुरः....'

112 *SL* VI 21 '....आसुरं....'

113 *SL* VI 9 '....आद्या....'

'ता एवाद्या: कुरुते'[114] (तै. सं. 3. 4 3) 'अग्नेस्त्वास्येन'[115] (तै सं 2. 6. 8) 'यथास्याद्ग्रथितम्'[116] (तै. सं. 6. 1. 9) । स्वारान्त–मति किम्? 'पाहि मार्य दिव:' (तै. सं. 1. 1. 13) 'अयता स्यात्' (तै. सं. 6. 1. 7) । 'कञ्चनाग:' (तै. सं. 4. 7 15) 'सदनानिकृ–त्वादित्' (तै. सं. 3. 1. 11) ॥ 96 ॥

आण्डाभ्या[117]मार्जि[118]मार्तीयेता[119]मान्त्यायत[120] आर्पयत्[121] ।
आर्घ्यन्ता[122]र्घ्नो[123]दार[124]मासी[125]दासिर्नासत उच्चवत्[126]
॥ 97 ॥

'वालधानाय स्वाहाण्डाभ्याम्' (तै. सं 7. 3. 16) 'धन्वनार्जि यजेम' (तै. सं. 4. 6. 6) 'वाक् च मनश्चार्तीयेताम्' (तै. सं. 2. 5. 11) 'व्यश्निनयश्चान्त्यायनश्च' (तै सं. 1. 7. 9) 'प्रजा:शुचार्पयत्' (तै. सं. 5. 1. 4) 'सोमपीथेनार्घ्यन्त' (तै. सं. 6. 3. 1) 'तेन त्व–ष्टार्घ्नोत्' (तै. सं. 1. 5. 1) 'एवमवारमिति' (तै. सं. 2. 6. 3)

---

114 *SL* VI 9 '....आद्या:...'
115 *SL* VI 21 '....आस्येन....'
116 c. f *SL* VI 21 '...थास्यात्....'
117 *SL* VI 7 '... आण्डाभ्यां....'
118 *SL* VI 7 '....आर्जि ...'
119 *SL* VI 14 '....आर्तीयेतां....'
120 *SL* VI 10 '....आन्त्यायन:....'
121 *SL* VI 15 '....आर्पयत्....'
122 *SL* VI 15 '....आर्घ्यन्त ...'
123 *SL* VI 15 '...आर्घ्नोत्....'
124 *SL* VI 15 '... आरं...'
125 *SL* VI 21 '... आसीत्....'

'ऋक्षा वा इयमलोमकासीत्' (तै सं. 7. 4. 3)। आस उपवेशने इत्येतद्धातूत्पन्नं पदमाकारादि भवति। 'पुरस्ताज्ज्योतिरुपास्महे'[127] (तै. सं. 5. 3. 2) 'न सहासीत'[128] (तै. सं. 2. 5. 1) 'प्रतिमुच्यास्ते'[129] (तै. सं. 2. 5. 1) 'पापीयाँश्चासाते'[130] (तै. सं. 1. 5. 9) 'प्राणैर्दाधारासीनः'[131] (तै. सं. 5. 1. 10) 'स्वाहासिष्यते'[132] (तै. सं. 7. 1. 19) इत्यादि। उदात्तवत्पदमासते इति न भवति। 'दिवे त्वा सते त्वा' (तै. सं. 3. 5. 8)। उच्चवदिति किम्? 'तस्यासते हरयः' (तै. सं. 4. 2. 9)। आसत इति किम्? 'स्वाहासिष्यते' (तै. सं. 7. 1. 19) ॥ 97 ॥

आश्ना[133]दावमाशितिम्ने[134]आस्ता[135]माशार[136] [137] आनृचुः[138] ।
आश्या[139]व्यमाह[140] चान्व[141]र्थमथानिङ्ग्यानुशासनम् ॥ 98 ॥

---

126 c. f *SL* VI 21 '....त्वापरं नासते....'
127 *SL* VI 20 '... आस्महे....'
128 *SL* VI 20 ' आसीत....'
129 *SL* VI 20 '....आस्ते....'
130 *SL* VI 20 '....आसाते....'
131 *SL* VI 20 '... आसीनः....'
132 *SL* VI 21 '....आसिष्यते....'
133 *SL* VI 19 '....आश्नात्....'
134 *SL* VI 19 '...आशितिम्ने....'
135 *SL* VI 20 '....आस्तां....'
136 *SL* VI 19 ....आश....'
137 *SL* VI 15 '....आरे....'
138 *SL* VI 10 '....आनृचुः....'
139 *SL* VI 19 '....आश्यं....'

'साग्रे प्राशतात्' (तै. सं. 6. 5. 6)। आवमिति 'युवावौ द्विवचने' (अष्टा. 7. 2. 92) इत्यावादेशस्य ग्रहणम्। पदापेक्षया नपुंसकत्वम्। आवादेशोत्पन्नं पदमाकारादि भवति। 'गोरेवावमीश्वरौ' (तै. सं. 2. 6. 7) 'असावावदधि'[142] (तै. सं. 2. 5. 6) 'क्षुधे स्वाहाशितिम्ने' (तै. सं. 7. 1. 17) 'इमे वै सहास्ताम्' (तै. सं. 3. 4. 3) 'क्रविषो मक्षिकाश' (तै. सं. 4. 6. 8) 'तवारे अस्मत्' (तै. सं. 4. 5. 1) 'वाचानृचुः' (तै. सं. 7. 3. 1)। आश्याव्यम्–आश्यम् आव्यमित्यर्थः। 'तस्य नाश्यम्' (तै. सं. 2. 5. 1) 'नाव्यं प्रतिगृह्णाति' (तै. सं. 2. 2. 6)। आहेत्येतत्पदमन्वर्थमर्थानुगुणमाकारादि भवति। 'द्विः पुनरृतुनाह' (तै. सं. 6. 5. 3) 'अरुणो ह स्माहौपवेशिः' (तै. सं. 6. 1. 9) 'पृषदाज्यस्योपहत्याह' (तै. सं. 6. 3. 10) 'प्राह तादृगेव तत्' (तै. सं. 6. 5. 10) 'आत्मानं पराह' (तै. सं. 2.5. 11) 'आश्राव्याह देवान्' (तै. सं. 2. 6. 9) 'पुरोनुवाक्ययाह' (तै. सं. 2. 6. 2)। अत्र व्यक्त्यर्थं पुरातनं किमपि लक्षणं लिख्यते-'ऋतुनास्मोपहत्यप्रपराश्राव्यानुवाक्यया आ–हैतत्परम्'[143] (सप्तलक्षणे 6. 23) इति। एतासिति किम्? 'किं वाहैतस्य क्रियते' (तै. सं. 5. 3. 1)॥ चकारोऽनुक्तसमुच्चयार्थः। 'साहापोदेवीः' (तै. सं. 1. 2. 2) पश्यतापश्ड्वावया'[144] (तै. सं 5. 6. 1) इत्येतयोः 'अपूछ्रुदन्तोच्चम्' (प. प्र. 74) इति अन्तोदात्तस्यैव अकारादित्वविधानात् पारिशेष्यादाकारादित्वं गम्यते। 'रक्षसामनुपलाभायात्तः'[145]

---

140 *SL* VI 17 '....आव्यं ...'

141 *SL* VI 23
'ऋतुना स्मोपहत्यप्रपराश्राव्यानुवाक्यया आहैतत्पूर्वम् ...'

142 c. f *SL* VI 17 '... आवत् नावग्रहात्....'

143 *SL* reads पूर्वम् for परम्. *S*ee the full text quoted under f. n. 141

144 c. f *SL* VI 11 '.\..पश्यतापः....'

145 *SL* VI 8 '....आत्तः....'

(तै. सं. 6. 3. 2) 'मैत्रावरुण्यामिक्षया'[146] (तै. सं. 2. 5. 5) 'यस्यामयति प्राणः'[147] (तै. सं. 7. 2. 7) इत्येतेषाम् उत्तरत्र 'आत्त.... आमिक्षा....' (प. प्र. 113) इति 'अरात्यामय–' (प. प्र. 101) इति [च] ग्रहणसामर्थ्यात् आकारादित्वं सिद्धम् । 'दक्षिणाग्नेयमष्टाकपालम्'[148] (तै. सं. 1. 8. 9) 'इमामेवाभ्यो लोकान्'[149] (तै. सं. 7. 2. 4) 'तमेवाभिरुपाप्नोति'[150] (तै. सं. 3. 4. 9) 'इत्याहाभ्यामेवैनम्'[151] (तै. सं. ७. 1. 7) 'सोऽकामयतासामहम्'[152] (तै. सं. 7. 5. ८) इत्यादीनि 'पौनःपुन्यात्' (प. प्र. 8) इति परिभाषया सिद्धानि । 'विश्वदावस्य त्वासन्'[153] (तै. सं. 3. 3. 8) इत्येतत्पदं पूर्वत्र 'आसन्निमाँल्ले' (प. प्र. 12) इति ग्रहणसामर्थ्यात्सिद्धम् । अथेत्ययमधिकारः । अनिङ्ग्यानुशासनमधिक्रियते इति । अनिङ्ग्यानुशासनमिति समस्तरूपेण ग्रहणात् 'विकारी पदान्तः स्पष्टमुच्यते' (प. प्र. 9) इत्येतत्सर्वं निवर्तते इति गम्यते । अनिङ्ग्यानामनुशासनमनिङ्ग्यानुशासनम् । 'अथ वर्णानाम्' (तै. प्रा. 23. 5) इत्यादिना येषां पदानां संहितालक्षणमुक्तं तान्यत्र गृह्यन्ते ॥ 98 ॥

अखण्डविपर्योक्तानि भेदे सुब्लिङ्ग्योरपि ।
अन्तोच्चतरकेत्तासु वृध्यादित्वेऽपि नञ्यपि ।
स्थलान्तरेऽपि तद्वत्स्युरुक्तान्यप्युपबन्धतः । 99 ॥

---

146 *SL* VI 13 '....आमिक्षया....'
147 *SL* VI 13 '.... आमयति ....'
148 *SL* VI 1 '....आग्नेय....श्रुतिः....'
149 *SL* VI 12 '....आभ्यः....'
150 *SL* VI 12 '....आभिः....'
151 *SL* VI 12 '....आभ्यां....'
152 *SL* VI 21 '....आसां....'
153 *SL* VI 20 '....आसन्....'

प्रातिशाख्ये सप्तपरादिपु च अखण्डत्वेन यानि पदान्युक्तानि तानि अनिङ्ग्यानि[1] भवन्ति । भेदे सुब्लिङ्गयोरित्यादि उक्तान्यप्युपग्रन्धतः इत्यन्तम् अखण्डविपयोक्तानि इत्यनेन 'ऊर्ध्वदीर्घात्' (प. प्र. 100) इत्यादिना वक्ष्यमाणेन विधिना च सम्बध्यते । अखण्डविषयोक्तानि पदानि सुपां भेदे लिङ्गभेदे अन्तोच्चतरः कः इन् ता इत्येतेपु सत्सु वृध्यादित्वे नञ् समासेऽपि अनिङ्ग्यानि भवन्ति । अखण्डविषयोक्तानाम् अन्यथापि सिद्धेऽनिङ्ग्यत्वे सुब्भेदादिपु अनिङ्ग्यत्वविधित्सयानुवादोऽयं तरादिप्रत्ययग्रहणात् तदन्तानि पदानि गृह्यन्ते । अन्तोच्चत्वं तरस्यैव विशेषणं, 'पूर्णतरञ्च मे' (तै. सं. 4. 7. 4) इत्यादिपु अनिङ्ग्यत्वानिवृत्त्यर्थम् । ता इत्यनेन तल्प्रत्यस्य ग्रहणम् । 'अप्यकारादि' (तै. प्रा. 1. 52) 'अन्कारादि च' (तै. प्रा. 1. 53) इत्यनयोः पूर्वत्र क्वचिन्निषेधदर्शनात् नञ्यपीत्यनेन पुनर्विधानम् । सहपठितस्य तलन्तस्य अनिङ्ग्यत्वविधानात् त्वान्तस्य इङ्ग्यत्वं गम्यते । 'आग्रयणत्वमित्याग्रयण त्वम्' (तै. सं. 6. 4. 11) । उदाहरणानि प्रातिशाख्ये तावत्–'द्वे ह्येते देवते'[2] (तै. सं. 2. 1. 9) 'स्वाया एवैनं देवतायै'[3] (तै. सं. 2. 2. 10) 'शिशीते शृङ्गे' (तै. सं. 1. 2. 14) 'अशृङ्गाः सति शृङ्गिणि' (तै. सं. 7. 5. 1) 'प्रत्ते काममन्नाद्यं दहाते'[4] (तै. सं. 5. 4. 9) 'प्रत्ता वै गौर्दुहे'[5] (तै. सं. 1. 7. 1) 'अनड्वाञ्च मे'[6] (तै. सं. 4. 7. 10) 'अनोवाहावनड्वाहौ'[7] (तै. सं. 5. 6. 21) 'अनड्वाहस्सिनीवाल्यै'[8] (तै. सं. 5. 6. 18) 'अनडुहा क्रीणाति'[9] (तै. सं. 6. 1. 10) 'घृणीवाञ्चेतति'[10] (तै. सं.

---

1 'अविभागपदमेवानिङ्ग्यम् । न त्वसमासपदम् । शचीपतिः बृहस्पतिरित्यादिना समस्तत्वेऽपि अनिङ्ग्यत्वाङ्गीकारात् । (Com, on *SL* VII 3)

2, 3 *SL* VII 36 '....देवताशब्दवत्....'

4, 5 *SL* VII 45 '....प्रत्तश्रुत्....'

6- 9 *SL* VII 5 '....अनड्वाहश्रुत्...'

3. 5. 11, 'ईडामहै देवाँ ईडेन्यान्'[11] (तै. सं. 2. 5. 9) 'अग्निरीडेन्यो गिरा'[12] (तै. सं. 4. 4. 4) 'अन्यान् अधरान्त्सपत्नान्' (तै. सं 3. 2 8) 'उपयामधरेणोष्ठेन' (तै. सं. 5. 5. 12) 'ये नः सपत्ना अप ते'[12] (तै. सं. 4. 7. 11) 'पुरुत्रा च रश्मीननु' (तै सं. 4. 1. 2) 'आत्मा रश्मयः केशाः' (तै. सं. 7. 5. 25) 'पतङ्गानसन्दितः'[14] (तै. सं. 1. 2. 14) 'पतयन्तं पतङ्गम्'[15] (तै. सं. 4. 3. ) 'समानानुशन्नग्ने' (तै. सं. 4. 3. 13) 'समान्य ऋचो भवन्ति'[16] (तै. सं. 7. 5. 4) 'समानी याज्यानुवाक्ये भवतः समानं हि' (तै. सं. 2. 3. 8) 'परि द्वेषसो अंहृति' (तै. सं. 2. 6. 1 ) 'मित्रमहो अवद्यात्'[17] (तै. सं. 1. 2. 14) 'अग्निः शर्धमनवद्यम्'[18] (तै. सं. 1. 3. 14) 'आविन्नो अग्निर्गृहपतिः'[19] (तै. सं. 1. 8. 12) 'आविन्नौ मित्रावरुणौ'[20] (तै. सं 1. 8. 12) 'अदब्धासो अदाभ्यम्' (तै. सं. 1. 1. 10) 'अदब्धेभिस्सवितः' (तै. सं. 1. 4. 24) 'तान्धीरासो अनुदृश्य' (तै. सं. 1. 1. 9) 'धीरैः कर्मण्याम्मुदम्' (तै. सं. 4. 1. 5) 'एकादशासो अप्सुषदः[21] (तै. सं. 1. 4. 11) 'य एकादशस्तनः'[22] (तै. सं. 6. 6. 4) 'यदेकादशिनी'[23] (तै. सं 5. 5. 7) 'स एतामेकादशिनीम्'[24] (तै. सं 6. 6. 4) 'अंगिरसो नः पितरः' (तै. सं. 2. 6. 12)

---

10 *SL* VII 28 '....घृणीवान्....'

11, 12 *SL* VII 19 '....ईडेन्यश्रुत्....'

13 *SL* VII 75 '....सपत्न....शब्दाः....'

14, 15 *SL* VII 43 '....पतङ्ग....'

16 *SL* VII 69 '....समान्यः....'

17 *SL* VII 6 '...अवद्यात्....'

18 *SL* VII 1 '....अनवद्यं....'

19, 20 *SL* VII 14 '....आविन्न....श्रुत्....'

21- 24 *SL* VII 23 '....एकादशश्रुतिः....'

'ऊर्गस्याङ्गिरसी' (तै. सं. 1. 2. 2) 'भद्र शोचेपूपन्देत्र'[25] (तै. सं. 4. 2. 2) 'अन्तरत एव मेध्यो भवति'[26] (तै. सं. 0. 1. 1) 'हिरण्मयं दाम दक्षिणा'[27] (तै. सं. 2. 4. 13) 'अग्ने देव पाणिभिर्वीयमाणः'[28] (तै. सं. 1. 1. 13) 'रजनो वै कौणेयः' (तै. सं. 2. 3. 8) 'यज्ञ उल्वणं क्रियते (तै. सं. 3. 4. 3) 'अनुल्वणं वयत जोगुवाम्'[29] (तै. सं. 3. 4. 2) 'युष्मानीतो अभयम्'[30] (तै. सं 2. 1. 11) 'ओँ सा मोद इवेति' (तै. सं. 3. 2. 9) 'हंसश्शुचिपत्' (तै. सं. 1. 8. 15) 'ते शस्ता' (तै. सं. 4. 6. 8) 'कनीयांसो देवाः' (तै. सं. 5. 3. 11) 'भूयसीर्ङ् देवतः' (तै. सं. 2. 6. 6) 'वृषदशस्ते'[31] (तै. सं. 5. 5. 12) 'शिशुमारो हिमवतः'[32] (तै. सं. 5. 5. 11) 'शरीरमेव सँस्कृत्य'[33] (तै. सं. 5. 6. 6) 'तन्नस्सँस्कृतम्'[34] (तै. सं. 1. 4. 43) इ [त्या] दि । मप्तपरादिष्वपि– 'विश्वदावस्य त्वासन्' (तै. सं. 3. 3. 8) 'अपिकक्ष आसनि'[35] (तै. सं. 1. 7. 8) 'पृथिव्यां पार्थि–

---

25 *SL* VII 7 '....अपूपं....'

26 *SL* VII 3 '....अन्तरतः....'

27 *SL* VII 75 '... हिरण्मयम्....'

28 *SL* VII परि 14 '....मानमाणश्श्रुदन्तकम्....'
Also vide *SL* VII परि 7 '....वीय....आदि च....'

29 *SL* VII 2 '....अनुल्वणं....'

30 *SL* VII 55'....युष्मानीतः...'

31 *SL* VII 60 '....वृषदंशः...'

32 *SL* VII 63 '....शिशुमारः....'

33 *SL* VII 74 '.. संस्कृत्य....'

34 *SL* VII 72 '....संस्कृतं....'

35 *SL* VII 15 '....आसनि ...'

वान्ध्रुवन्ध्रुवेण' (तै. सं 3. 2. 8) 'ये पार्थिवे रजसि' (तै. सं. 2. 6. 12) 'मारुताञ्जुहोति'[36] (तै. सं. 5. 4. 7) 'मारुतमसि मरुताम्'[37] (तै. सं. 2. 4. 7) 'पुरोडाशान्निर्वपन्ति'[38] (तै. सं. 7. 5. 6) 'परिवापः पुरोडाशः'[39] (तै. सं. 6. 5. 11) 'पुरोडाशिन्य उपसदः'[40] (तै. सं. 7. 1. 9) 'अश्वा भवथ वाजिनः' (तै. सं. 1. 7. 7) 'यदश्वस्य क्रविषः' (तै. सं. 4. 6 8) 'ससस्त्यश्वकः'[41] (तै. सं. '. 4. 19) 'अश्वतरोत्यप्रवत'[42] (तै. सं. 7. 1. 1) 'आस्य चत्वारो वीरा जायन्ते' (तै. सं. 7. 1. 8) 'एष ते योनिर्वीरताम्'[43] (तै. सं. 1. 4. 8) 'अघ्निया देवभागम्' (तै सं. 1. 1. 1) 'एतानि ते अघ्निये नामानि' (तै. सं. 7. 1. 6) 'शरोवका वेतसशाखया चावकाभिश्च'[44] (तै. सं. 5 4. 4) 'अवकामनूपदधाति'[45] (तै. सं. 5. 4. 2) 'अथवा अस्यैतेगृहीताः'[46] (तै. सं. 3 2. 1) 'अगृहीतेभ्यः स्वाहा'[47] (तै. सं. 7. 3. 19) 'जना यदग्निम्' (तै. सं. 4. 2. 2) 'जनतामेति'[48] (तै. सं. 2. 2. 1) 'जनतायाञ्चरति'[49] (तै. सं. 2. 2. 6) 'नान्तमा वहन्ती'[50] (तै. सं. 6. 4. 2) 'अत्र सुवतादनागसः'[51] (तै. सं. 4. 1. 11)

---

36, 37 *SL* VII 52 '....मारुत श्रुतिः ...'
38, 39 *SL* VII 43 '....पुरोडाशशब्दः....'
40 *SL* VII 48 '....पुरोडाशिन्यः ...'
41 *SL* VII 3 '....अश्वकः....'
42 *SL* VII 1 '... अश्वतरः....'
43 *SL* VII 62 '....वीरतां....'
44, 45 *SL* VII 7 '... अवका....श्रुतः....'
46, 47 *SL* VII 2 '....अगृहीतश्रुत्....'
48, 49 *SL* VII 31 '....जनताश्रुत्....'
50 *SL* VII 9 '....अन्तम....शब्दवत्....'
51 *SL* VII 4 '....अनागस....श्रुतः....'

'इष्टका वै देवा:'[52] (तै. सं 5. 7. 2) 'यदेते इष्टके' (तै. सं. 5. 3. 5) 'अनिष्टक आहृतिम्'[53] (तै. सं. 5. 4. 10) 'दन्दशूका निरस्नम्'[54] (तै. सं. 1. 8. 14) 'दन्दशूकानाम्'[55] (तै. सं. 6. 1 10) 'अदन्द शूका:'[56] (तै. सं. 6. 1. 10) 'धिष्णिया वा अमुष्मिन्' (तै. सं. 6. 3. 1) 'धिष्णियानुपवपति' (तै. सं. 6. 3. 1) 'आदित्या वा अपरोद्धार:'[57] (तै. सं. 2. 3. 1) 'आदित्यासो जगत्स्था:'[58] (तै. सं. 2. 1. 11) 'यूयं तेषां वासिष्ठा भूयास्त' (तै. सं. 3. 2. 5) वासिष्ठो हसात्यहव्य:'[59] (तै सं. 6. 0. 2) 'एष वै देवयान: पन्था:' (त. सं. 2. 5. 6) 'पन्थानो राजन्' (तै. सं. 2. 3. 14) 'विप्रा वर्धन्ति सुष्टुतम्'[60] (तै. स 1. 4. 46) 'विप्रो दूत: परिष्कृत:'[61] (तै. सं. 3. 2. 11) 'विद्या वै धिषणा विद्य भि:'[62] (तै. सं. 5. 1. 7) 'यज्ञिया यज्ञियानाम्' (तै. सं. 4 6. 1) 'गर्भा: प्रावृता जायन्ते'[63] (तै. सं. ७. 1. 3) 'प्रावृतस्य रति गृभीता'[64] (तै. सं 4. 6. 8) 'ब्राह्मणा वै छन्दांसीति' (तै. सं. 2. 6. 9) 'यद्ब्राह्मणश्चाब्राह्मणश्च' (तै. सं. 2 5. 11) 'रजता हरिणी: सीसा:' (तै. सं. ५. 2. 11) 'अथ रजताथ हरिणी' (तै. सं. ०. 2. 3) 'मुञ्चामि रशना:' (तै. सं. 1. 6 4) 'एकस्मिन् यूपे द्वे रशने' (तै. सं. 6. 6. 4) 'ऊन्निखातादा रशनाया: (तै. सं. 6. 3. 4) 'मरुत्वतीया

---

52 *SL* VII 18 '....इष्टका....'

53 *SL* VII 4 '....अनिष्टके....'

54- 56 *SL* VII 39 '....दन्दशूकाश्रुति:....'

57, 58 *SL* VII 12 '....आदित्यशब्दवत्....'

59 *SL* VII 59 '....वासिष्ठ....'

60. 61 *SL* VII 58 '....विप्र....शब्दौ ...'

62 *SL* VII 61 '....विद्या श्रुत्....'

63, 64 *SL* VII 44 '... प्रावृतस्य श्रुति:....'

धनुः'[65] (तै. सं. 6 5. 5) 'मरुत्वतीयमुक्थम्'[66] (तै. सं. 4 4. 2) 'गावः पशूनां भूयिष्ठाः' (तै. सं. 6. 5. 10) 'भूयिष्ठान्ते' (तै. सं. 1. 1. 14) 'भूयिष्ठाभिरृग्भिः' (तै. सं. 6. 5. 10) 'पुरुषा ब्राह्मणः' (तै. सं. 2 5. 10) 'यज्ञेन वै पुरुषः' (तै. सं. 3. 2. ०) 'पौरुषेयेण दैव्येन'[67] (तै. सं. 4. 7. 15) 'पौरुषेयो व [धः]'[68] (तै. सं. 4. 4 1) 'वैश्वानरा ब्रूपयन्तु'[69] (तै. सं. 4. 4. 6) 'वैश्वानरो न ऊत्या'[70] (तै. सं. 1. 5. 11) 'तेन वैश्वा [नरा] न्नै ति'[71] (त सं 5. 5. 1) 'भ्रातृव्या यदपोग्ने:'[72] (तै. सं. 5 6. 2) 'परास्य भ्रातृव्य:'[73] (तै. सं. 1. 7. 3) 'उता भ्रातृव्यः'[74] (तै. सं. 2. 4. 2) 'सिकता निवपति' (तै. सं. 5. 2. 3) 'सिकताभिः पूरयति' (तै. सं. 5. 2. 9) 'येनाग्ने दक्षिणा युक्ताः' (तै. सं. 5 1. 4) 'नीतासु दक्षिणासु' (तै. सं, 6. 1. 3) 'मान्दा वाशाः'[75] (तै. सं. 2. 4. 7) 'मान्दासु ते शुक्र' (तै. सं. 3. 3. 1) 'ये वृक्षेषु सस्पिञ्जराः'[76] (तै. सं. 4. 5. 11) 'सस्पिञ्जराय त्विषीमते'[77] (तै. सं. 4. 5. 2) 'वरुणगृहीता वै स्थावराः'[78] (तै. स. 6. 4. 2) 'यत्स्थाव[रा]णाम्'[79] (तै. सं. 6. 4. 2) 'अन्वन्य इद्ययुः' (तै. स. 4. 1. 1) 'अन्यासां प्रजानाम्'[80] (तै. सं. 5. 2. 1) 'नभन्तामन्यकेसमे' (त. सं. 3. 2. 11)

---

65, 66 *SL* VII 53 '....मरुत्वतीयश्रुतः....'

67, 68 *SL* VII 44 '....पौरुषेयश्रुतिः....'

69- 71 *SL* VII 61 '....वैश्वानर....श्रुत्....'

72- 74 *SL* VII 52 '....भ्रातृव्यश्रुत्...'

75 *SL* VII 52 '....मान्दा....'

76, 77 *SL* VII परि 13 '....सः....आदयः....'

78, 79 *SL* VII 69 '....स्थावर श्रुतिः ...'

80 *SL* VII 11 '....अन्यासां....'

81 *SL* VII 6 '....अन्यकेषां...'

'नभन्तामन्यकेषाम्'[81] (तै. सं. 1. 7. 13) 'अन्यतरस्याह्न:'[82] (तै. सं. 7. 1. 4) 'नान्यतरांश्च नोपावर्तंत 8' (तै. सं. 2. 4. 3) 'अवार इक्षवः पार्येभ्य:'[84] (तै. सं. 7. 3. 16) 'एतेनवारमपारम्'[85] (तै. सं. 7. 5. 3) 'उदीरतामवर उत्परास[86] (तै. सं. 2. 6. 12) 'परोवरैस्तन्त्वा जुषे'[87] (तै. सं. 1. 3. 5) 'सवित्र आतिच्छन्दसाय' (तै. सं. 7. 5. 14) 'हिरण्ययेन सविता' (तै. सं. 3. 4. 11) 'सावित्राणि जुहोति'[88] (तै. सं. 5. 1. 1) 'पार इक्षवोत्रार्येभ्य:' (तै. सं. 7. 3 16) 'तस्यै–तत्पारम्' (तै. सं. 7. 5. 1) 'अपारं प्रप्लवन्ते'[89] (तै. सं. 7. 5. 6) 'इन्द्रिय एव वीर्ये यज्ञम् (तै. सं. 2. 4. 11) 'मह इन्द्रियाय (तै. सं. 1. 6. 12) 'आत्मन एव तद्यजमाना:'[90] (तै. सं. 7. 4. 2) 'भवत्या–त्मना परा'[91] (तै. सं. 1. 7. 3) 'आत्मानमाप्रीणीत'[92] (तै. सं. 5. 1. 8) 'ऋष इत्यब्रवीत्' (तै. सं. 2. 5. 8) 'आर्षेयं वृणीते'[93] (तै. सं. 2. 5. 8) 'चत्वार आर्षेया'[94] (तै. सं. 3. 4. 8) 'ऋषिरार्षेय:'[95] (तै. सं. 6. 6. 1) 'स्वकृत इरिण उपदधाति' (तै. सं. 5. 2. 4) 'तत्स्व-कृतमिरिणमभवत्' (तै. सं. 2. 5. 1) 'अथ कतम एते'[96] (तै. सं. 2. 6. 9) 'कतमत्स्वित्किमासीत्'[97] (तै. सं. 4. 6. 2) 'गायत्रिया एवैतेन'[98] (तै. सं. 6. 2. 1) 'यद्गायत्रिय: स्त्रिय:'[99] (तै. सं. 2. 5. 8) 'गा-

---

82, 83 *SL* VII 1 '....अन्यतर श्रुत:....'
84 *SL* VII 11 '....अवारे ...'
85 *SL* VII 8 '....अनवारं....'
86, 87 *SL* VII 7 '...अवर....श्रुतौ....'
88 *SL* VII 75 '....सावित्र....शब्दा:....'
89 *SL* VII 3 '....अपारं....'
90, 92 *SL* VII 12 '....आत्म....श्रुति:....'
93- 95 *SL* VII 12 '....अर्षेय....श्रुति:....'
96- 97 *SL* VII 25 '....कतमश्रुति:....'

यत्रञ्छन्द ग्रारोह'[100] (तै. सं. 4. 2. 1) 'गायत्रेण छन्दसा'[101] (तै. सं· 1. 1. 9) 'त्रिष्टुभ एवैतेन'[102] (तै सं 6 2. 1) 'त्रिष्टुभ उपदधाति'[103] (तै· सं 5. 3. 8) 'त्रैष्टुभञ्छन्दः'[104] (तै· सं· 1. 3. 10) 'त्रैष्टुभेन छन्दसा'[105] (तै. सं. 1. 1. 9) 'जगत्या एवैतेन' (तै. सं. 6. 2. 1) 'जगतीरुपदधाति' (तै· सं· 5. 3. 8) 'जागता वै पशवः' (तै. सं. 2. 5. 10) 'जागतेन छन्दसा' (तै. सं· 1. 1. 9) 'गर्दभ आसादयति'[106] (तै· सं· 5 1. 5) 'तस्माद् गर्दभो द्विरेता:'[107] (तै· सं 7. 1. 1) 'गर्दभेन सम्भरति'[108] (तै· सं. 5. 1. 5) 'यथातिथय आगताय'[109] (तै सं. 5. 2. 2) 'इन्द्रस्य धर्मों अतिथिः'[110] (तै. सं. 1. 6. 12) 'अग्नेरातिथ्यमसि'[111] (तै. सं. 1. 2. 10) 'आतिथ्यस्य क्रियत इति'[112] (तै. सं. 6. 2. 1) 'मा [ध्य] न्दिन एव सवने'[113] (तै. सं. 3 2. 9) 'माध्यन्दिनं सवनम्'[114] (तै. सं. 3. 2. 9) 'माध्यन्दिनस्य सवनस्य'[115] (तै. सं. 2. 2. 9) 'मध्यम उपयन्ति'[116] (तै· सं· 7. 5. 3) 'त्रैष्टुभम्मध्यमस्य'[117] (तै. सं. 7. 1. 5) 'तेजस एष आलभ्यते' (तै. सं. 5. 5. 1) तेजसे जुहोमि (तै. सं· 3 3. 1) 'अग्ने तेजस्विन् तेजस्वी' (तै. सं. 3. 3. 1) 'पावक आ चितयन्त्या'[118] (तै· सं· 4. 6. 1) 'पावका यासु'[119] (तै. सं. 5·

---

98- 101 *SL* VII 26 '....गायत्री श्रुतिः....'
102, 103 *SL* VII 34 '....त्रिष्टुभश्रुत्....'
104, 105 *SL* VII परि 7 '....त्रैकारादि....'
106- 108 *SL* VII 26 '....गर्दभश्रुतिः....'
109, 110 *SL* VII 8 '....अतिथिश्रुतिः....'
111, 112 *SL* VII 14 '....आतिथ्यशब्दवत् ...'
113- 115 *SL* VII 53 '....माध्यन्दिनशब्दो ...'
116, 117 *SL* VII 52 '....मध्यमशब्दवत्....'
118- 120 *SL* VII 48 '....पावक....श्रुतिः....'

7. 1) 'पावको अस्मभ्यम्'[120] (तै. सं. 4. 6. 1) 'अन्तरिक्ष एवाक्र-मते' (तै. सं. 6. 3. 2) 'दिवोस्मादन्तरिक्षात्' (तै. सं. 1. 6. 6) 'यदन्तरिक्षं पृथिवीम्' (तै सं. 1. 8. 5) 'अलज आन्तरिक्षः' (तै. सं. 5. 5. 10) 'अग्नय आयुष्मते' (तै. सं. 2. 2. 3) 'चतस्र आशाः प्रचरन्त्वग्नयः' (तै. सं. 5. 7. 4) 'आग्नेयमष्टाकपालम्'[121] (तै. सं. 1. 8. 1) 'यदाग्नेयीस्तेनाग्नेयाः'[122] (तै सं 5. 5. 1) 'आज्य शाश्वत्थे'[123] (तै. सं. 1. 8. 9) 'आज्यस्याज्यमसि'[124] (तै. सं. 1. 6. 1) 'यजमान एव तेजो दधाति' (तै. सं. 6. 5. 0) 'भ्रातृव्यो यज-मानो यजमानस्य' (तै. सं. 6. 2. 5) 'यथा वस्यस आहरति' (तै. सं. 6. 5. 10) 'सिनीवाल्या आग्नावैष्णवाः' (तै सं. 5. 6. 18) 'अमावास्या सिनीवाली[125] (तै. सं. 3 8.9) 'सिनीवाल्यै चरुम्' (तै. सं. 1. 8. 8) 'स्वस्तय आसुरी माया'[126] (तै. सं. 4. 1. 9) 'स्फ्य स्वस्तिर्विधनः[127] (तै. सं 3 3 4) 'स्वस्ति नो दिवो अग्ने'[128] (तै. सं. 4 3. 13) 'दह्र वै सापराभ्याम्' (तै. सं. 7. 5. 3) 'अपर आदीप्य' (तै सं 2 2 4) 'ऊर्जोनपाज्जातवेदः' (तै सं. 4. 2. 7) 'नपातञ्च विक्रमणञ्च'[129] (तै.सं. 2. 6. 12) 'नपात्को वै नाम'[130] (तै. सं. 5. 4 10) अमृतञ्च मेयक्ष्मञ्च मे[131] (तै. सं. 4. 7. 3) 'अनमीवा अयक्ष्माः[132] (तै. सं. 1. 1. 1) 'यज्ञस्यैवान्तं

---

121, 122 *SL* VII 12 '....आग्नेय....श्रुतिः....'

123, 124 *SL* VII 14 '....आज्य....शब्दवत्....'

125 *SL* VII 69 '....सिनीवाली....'

126- 128 *SL* VII 73 '....स्वस्तिशब्दः....'

129 *SL* VII 37 '....नपातं....'

130 *SL* VII 37 '....नपात्कं....'

131. 132 *SL* VII 9 '....अयक्ष्म....शब्दवत्....'

गत्वापथात्'[133] (तै. सं. 7. 2. 8) 'अपथेन प्रतिपद्यते'[134] (तै. सं. 7. 3. 1) 'सुषिराभ्रिर्भवति' (तै. सं. 5. 1. 1) 'इत्यभ्रिमादत्ते'(तै. सं. 5. 1. 1) 'अनमित्रञ्च मे'[135] (तै सं 4. 7. 3) 'अनमित्राय सुवध्वम्'[136] (तै. सं. 1. 8 10) 'त्वयावसेन'[137] (तै सं. 5. . 2) 'अवसाय पद्वते'[138] (तै. सं. 7. 4.1) 'यतेवस करोति'[139] (तै. सं. 2. 2. 5) 'कर्मणापसा'[140] (तै.सं. 7. 1 18) 'अपयश्छित्स्महि'[141] (तै. सं. 1. 2. 20) 'सीव्यत्वपस्सूच्याच्छिद्यमानया'[142] (तै. सं. 3. 3 11) 'अश्विनाध्वर्यू'[143] (तै. सं. 4 3 4) 'अध्वर्योवेरपाः'[144] (तै. सं. 6. 4. 3) प्रतिगराध्वर्यूणाम्'[145] (तै. सं 3. 2 9) 'वरुणो अर्यमायुः' (तै. सं 3 3. 11) 'आयोस्त्वासदने'[146] (तै. सं. 4. 4 3) 'प्रतिभूगन्त्यायवः' (तै. सं. 3. 3. 11) 'वैश्वानरं हि देवतयायुः'[147] (तै. सं. 4. 3. 6) 'आयुषो भुङ्क्ते'[148] (तै. सं 6 5. 2) 'न हीमे यजुपाप्तुम्' (तै. सं. 5. 2. 7) 'होतानाप्तस्यापयिता'[149] (तै सं. 7. 1. 5) 'आशुञ्जयन्तमनु यासु' (तै. सं. 1. 4. 9) 'आशूनां व्रीहीणाम्'[150] (तै. सं. 1. 8. 10) 'आशुस्सप्तिः' (तै. सं. 7. 5 18) 'अरं वहन्त्याशव.' (तै. सं. 4. 2. 9) 'साग्रयणं प्रत्यागच्छत्'[151] (तै. सं. 6. 4. 11) 'जग-

---

133, 134 *SL* VII 2 '....अपथ....श्रुत्....'
135, 136 *SL* VII 1 '....अनमित्र....श्रुतः....'
137-139 *SL* VII 7 '....अवस....श्रुतः....'
140, 141 *SL* VII 7 '....अपस....श्रुतः ...'
142 *SL* VII 69 '... सूच्या....'
143-145 *SL* VII 9 '....अध्वयु श्रुत्....'
146 *SL* VII 17 '....आयोः....'
147, 148 *SL* VII 12 '....आयुषश्रुतिः....'
149 *SL* VII 17 '.... आपयिता...'
150 *SL* VII 14 '....आशूनां....'

त्यै वर्तन्याग्रयणस्य'[152] (तै. सं. 2. 3. 10) 'अमुष्यामुष्यायणस्यान्नाद्यम्'[153] (तै. सं. 3. 4. 8) 'इममामुष्यायणम्'[154] (तै. सं. 1. 8. 10) 'असावामुष्यायणोस्याम्'[155] (तै सं. 1 8. 12) 'उपस्थाशानाम्मित्रवत्'[156] (तै. सं. 4. 4. 12) 'समिद्दिशामाशया नः'[157] (तै. सं. 4 4. 12) 'आशा दिश आपृणः'[158] (तै. सं. 4 1. 6) 'पञ्चर्तुष्वेवार्तवेषु'[159] (तै. सं. 7. 2. 6) तदार्तवानामार्तवत्वम्'[160] (तै. सं. 7. 2. 6) 'यो यज्ञस्यार्त्या वसीयान्'[161] (तै. सं. 2. 6. 6) 'स ईश्वर आर्तिमार्तोः'[162] (तै. सं. 2. 2. 4)। आर्तोरित्यस्याव्ययस्यार्तिशब्दे नान्तर्भावात् अनिग्यत्वं न भवति। 'अनार्त्या आश्राव्याह'[163] (तै. सं. 2. 6. 9) 'यस्याश्विने शस्यमाने'[164] (तै. सं. 2. 1. 10) 'आश्विनं धूम्रललामम्'[165] (तै. सं. 2. 1. 10) तदाश्विनीरुपदधाति'[166] (तै. सं 5. 3. 1) 'पशून् हिनस्ति नारण्यान्'[167] (तै. सं 5. 2. 9) 'यदारण्यानामारण्यान्'[168] (तै. सं. 5. 4. 3) 'नाद्या प्रजापतेः'[169] (तै. सं. 6. 4. 10) 'आद्यमस्यान्नम्'[170] (तै. सं 2. 2 5) 'अग्नेरनाद्यम्'[171] (तै. सं. 5. 7. 9) 'स्वाहाण्डाभ्याम्'[172] (तै. सं. 7. 3. 16) 'व्यृद्धमाण्डमजायत'[173] (तै. सं. 6 5. 6) 'धन्वनाजिञ्जयेम'[174] (तै. सं 4. 6. 6) 'आजिन्धावन्त्यनभिजितस्य'[175] (तै. सं. 1. 5. 9) 'पुरो–

---

151, 152 *SL* VII 17 '....आग्रयणश्रुतिः....'
153-155 *SL* VII 12 '....आमुष्यायण....श्रुतिः....'
156-158 *SL* VII 14 '....आशा....शब्दवत्....'
159. 160 *SL* VII 13 '....आर्तवश्रुतिः....'
161-163 *SL* VII 13 '....आर्तश्रुद्विनार्तोः....'
164-166 *SL* VII 13 '....आश्विन....श्रुतौ....'
167, 168 *SL* VII 12 ' आरण्य....शब्दवत् ...'
169-171 *SL* VII 14 '....आद्य ...शब्दवत्....'
172, 173 *SL* VII 12 '....आण्ड श्रुत् ....'

यावानमाजिषु'[176] (तै सं 3. 5. 11) इत्यादि यथासम्भवं द्रष्टव्यम्। स्थलान्तरेऽपि उपबन्धरूपेण उक्तान्यपि पदानि प्रदेशान्तरेऽपि आत्म—वद्भवन्ति। अनिङ्ग्यानि भवन्ति। पूर्वत्र अपिशब्द उक्तःप्रदेशान्तरेऽपि स्वीकारार्थः। उत्तरत्र अपिशब्दस्वरूपेण गृहीतस्य स्वीकारार्थः। यथा 'अक्षितिश्च म इत्यादि' (प. प्र. 106) इति वक्ष्यति। तत्र 'प्रियङ्गव' इत्येत्पदं 'पृश्नियं प्रियङ्गवो मारुताः' (तै. सं 2 2. 11) इत्यत्राप्यनिङ्ग्य भवति इत्यर्थः। 'भद्र शोचेपूपन्देव' (तै सं. 4 2. 2) इत्यत्र अपूपमित्येतत्पदम् 'अभ्यावर्तिन्नपूपम्' (तै. प्रा. 12 7) इति ग्रहणसामर्थ्यादनिङ्ग्यभूतम् 'एकाष्टकायामपूपम्' (तै. सं 3. 3. 8) इत्यत्रापि अनिङ्ग्यं भवति। एवं सर्वत्र द्रष्टव्यम्। 'उपबन्धस्तु देशाय नित्यम्' (तै. प्रा. 1. 59) इत्यस्याप्यपवादोऽयम्। ननु अयजुष्केणेत्यत्र कथमिङ्ग्यत्वम्? उच्यते। 'इन्द्रोऽयजुःपूर्व एनं केन' (तै प्रा. 7. 8) इति ग्रहणसामर्थ्यात् एतदेव ज्ञापकम्- नञ् पूर्वाणां सकारान्ताना ककारान्तानामिङ्ग्यत्वमेव भवति। 'अरेतस्कायेत्यरेतः- काय' (तै सं. 7. 5. 12)। सकारान्तानामिति किम्? 'अदन्तकाय' (तै. सं. 7. 5. 12) 'अनक्षिकाय' (तै. सं. 7. 5. 12) इत्यादि। ककारान्तानामिति किम्? 'अमनसे' (तै. सं. 7. 5. 12) इत्यादि ॥ 99 ॥

ऊर्ध्वदीर्घादनोभावाद् भ्यांभ्यस्सुष्वपि भिश्रुतौ।
ह्रस्वाच्चास्यामुदात्तायां गोश्चाशेषाद्विकारिणी[177] ॥ 100 ॥

---

174-176 *SL* VII 12 '....आजिश्रुत्....'

177 *SL* VII परि. 5, 6 'भिभ्यांभ्यस्सुभिरर्वागोभावं ह्रस्वभागदीर्घं च।
नित्यं विहाय नेङ्ग्य गोगीस्सुरदुन्दु चेति भिश्रुत्या ॥
अर्वाक् सर्वं षुणा......... ........

अत्र अपिशब्दः उभयत्र सम्बध्यते। पूर्वत्रावधारणार्थः। उत्तरत्रावधारणार्थोऽन्वादेशार्थश्च। ओभावव्यतिरिक्ताद् दीर्घात्परमेव भ्यांभ्यः सु इत्येतेषु सत्सु तत्पदमिङ्ग्यं भवति। भावग्रहणेन ओकारस्य वैकृतत्वं गम्यते। तत्प्रयोजनमुत्तरत्र द्रष्टव्यम्। दीर्घादूर्ध्वमिति निर्बन्धाद् भ्यांभ्यःसुभ्यः पूर्वं यत्र पदे खण्डांशस्तत्रैवायं विधिरुह्तिष्ठते। 'पूष्णो हस्ताभ्याम्' (तै.सं. 1. 1. 4) 'अक्षीभ्यां स्वाहा' (तै. सं. 7. 3. 16) 'मानुषीभ्यस्त्वमङ्गिरः' (तै. सं. 5 1. 5) 'स्कन्धेभ्यः स्वाहा' (तै. सं. 7. 3. 16) 'भन्दनासु कोतनासु' (तै. सं. 3. 3. 3) इत्यादि। दीर्घादिति किम्? बाहुभ्यामिति बाहु·भ्याम्' (तै. सं. 1.1.4) 'पक्ष्मभ्य इति पक्ष्म भ्यः' (तै. सं. 7. 3 16)। ऊर्ध्वंदीर्घादिति निर्बन्धेन किम्? 'भयप्रचालाभ्यामिति प्रचाला-भ्याम्' (तै. सं 5 7. 13) 'अवपन्नेभ्य इत्यवपन्ने-भ्यः' (तै. सं. 7. 3. 19) सुवृजनास्विति सुवृजना-सु विक्षु' (तै सं 2. 6. 12)। प्रातिशाख्ये 'देवाशीका–' (तै. प्रा. 3. 2) इत्यारभ्य 'अनूहनूसूविभूषु इत्यवग्रहः' (तै. प्रा. 3. 7) इत्युपसंहारात् पदान्तर्भूतानां सर्वत्रेङ्ग्यत्वमेवेति गम्यते। अवधारणेन अस्य विधेः सर्वापवादत्वं गम्यते। 'असंख्यानिपरप्रादिः संख्या' (प. प्र. 104) इति संख्यावाचकस्य पदस्य अनिङ्ग्यत्वं वक्ष्यति। तत्र 'चतुर्भ्यः स्वाहा' (तै. सं. 7. 2. 13) 'पञ्चभ्यः स्वाहा' (तै. सं. 7. 2. 14) 'दशसु मासूत्तिष्ठन्नृध्नोति द्वादशसु' (तै. सं. 7. 5. 2) इत्यादीनि संख्यावाचकानि पदानि इङ्ग्यानि भवन्ति। एवं सर्वत्र द्रष्टव्यम्। श्रुतिग्रहणमुत्तरार्थम्। अपिशब्द ऊर्ध्वंदीर्घादनोभावादित्येतदाकर्षति। वैकृतोऽकारव्यतिरिक्तो दीर्घात्परं भिःइत्यस्मिन् सति तत्पदमनिङ्ग्यं भवति। पृथग्ग्रहणमुत्तरार्थम्। 'पूर्वीभिर्हि' (तै. सं. 4. 3. 13) 'तं पत्नीभिः' (तै. सं. 4. 7. 13) 'सूर्यः सन्तनूभिः' (तै. सं. 4 4 8) इत्यादि। अन्वादेशेन किम्? भानुभिरिति भानु·भिः' (तै. सं. 2. 1. 11) 'महोभिरिति महः–भिः' (तै. सं. 4. 3. 13) 'अंगिरोभिरित्यंगिरः–भि' (तै. सं. 2. 6 12)। भावग्रहणेन किम्? 'अग्ने गोभिर्नः' (तै. सं. 2. 4. 5)। अवधारणेन किम्? 'सवनन्द्वादशभिः' (तै. सं. 7. 5.

7)। अस्यामिति स्त्रीलिङ्गनिर्देशात् भिश्रुनाविति गम्यते। भिश्रुता-विति सन्धिसामर्थ्यात् विसर्जनीयान्तमविसर्जनीयान्तं च गृह्यते। चकाराद् दीर्घादपीति गम्मते। ह्रस्वाद्दीर्घाच्च परमुदात्तायां भिश्रुतौ सत्यां तत्पदमनिङ्ग्य भवति। अनेन ह्रस्वमात्रस्य अनिङ्ग्यत्वं विधीयते। दीर्घस्यैव तु पूर्वेणैव सिद्धमनूद्यते। अन्यथा अपवादशङ्का स्यात्। थञ्जनपर्युदासे तु न तात्पर्यम्, प्रत्युदाहरणाभावात्। 'सुरभिर्वसानः' (तै. सं. 1. 3. 14) 'सुरभि नो मुखा करत्' (तै. सं. 1. 5 11) 'सुरभावु लोके' (तै. सं. 1. 3. 14) 'सुरभीणि वि यन्तु' (तै. सं. 4. 3 13) 'दुन्दुभिर्वावदीति' (तै. सं. 4. 6. 6) 'दुदुभीन्त्ममाघ्नन्ति' (तै सं. 7. 5. 9) 'या दुन्दुभौ या तूणवे' (तै. सं 6. 1. 4) 'अष्टाभिर्विकर्षति (तै. सं. 5. 4. 4)। उदात्तायामिति किम्? 'सप्तभिः पवयति' (तै.सं 6. 1. 1)। ह्रस्वादूर्ध्वमिति निर्वन्धात् पदस्यानेकस्वरत्वं गम्यते। तस्मात् 'अश्वस्त्रिभिस्तिष्ठँस्तिष्ठति' (तै. सं. . 4. 12) इत्यत्र अनिङ्ग्यत्वं न भवति। 'आभिष्टे अद्य गीर्भिः' (तै. सं. 4 4. 4) इत्यत्र 'मा किरीयुरायुः' (तै. प्रा. 6. 5) इति ग्रहणसायर्थ्याद् अनिङ्ग्यमेव भवति। 'अथो आभिरेव' (तै. सं. 2. 4. 10) 'आभिर्नो अर्कैः' (तै. सं. 4. 4. 4) इत्यादीनि 'भेदे सुब्लिङ्ग्योः' (प. प्र. 99) इत्यादिपरिभाषयैव अनिङ्ग्यानि भवन्ति। चकारो भिश्रुत्याकर्षकः। गीर्रित्येतद् भिश्रुतौ सत्यामत्यनिङ्ग्यमेव भवति। 'गीर्भिः कृणुध्वम्' (तै. सं. 4. 1. 11) भिश्रुतौ स्त्रीलिङ्गत्वात् विकारिणीत्येतद्विशेषणं तदनन्तरं इत्येतत्परामृशति। सो षत्वमापन्न इत्यर्थः। अशेषात्सर्वस्मात् ह्रस्वाद्दीघात् व्यञ्जनादेकस्वरादनेकस्वराच्चेत्यर्थः। एतेभ्य ऊर्ध्वं षत्वमापन्ने सु इत्यस्मिन् सति तत्पदमनिङ्ग्यं भवति। 'ओषधीषु' (तै. सं. 1. 7. 10) 'चितीषु' (तै. सं. 5. 4. 2) 'पक्षिषु' (तै. सं. 2. 3. 13) 'देवेषु न' (तै. सं. 1. 4. 45) 'मा नो गोषु' (तै. सं. 3. 4 11) 'अश्वेषु' (तै. सं. 4. 2. 9) 'ह वा ऋत्विक्षु' (तै. सं. 7. 2. 10) 'विक्षु' (तै. सं. 1. 2. 8) इत्यादि ।। 100 ।।

अरात्या[178]मय[179]सौ[180]दित्यौ[181]त्रै[182]तुर्यौ[183]माम[184]सासह:[185] ।
पष्ठौ[186]सपर्य[187]पल्पूलककु[188]वाव[189]व्यथा[190]दिकम् ।। 101 ।।

अरातीत्येवमादिपदमनिङ्ग्यं भवति । 'अरातीयन्तमधरम्' (तै. सं. 3. 1. 4) 'अरातीयतो हन्ता' (तै. सं. 1. 6. 5) 'यस्यामयति प्राण:' (तै. सं. 7 2 7) 'गृह्णीयादामयाविन:' (तै. सं 7. 2. 7) 'सौवर्चनसस्तुभिञ्जम्' (तै. सं. 1. 7. 2) 'सौश्रवसाय जिन्वि-ति' (तै. सं 4. 6. 8) 'सौत्रमण्या समभरन्' (तै. सं. 5. 6. 3) 'दित्यौही च मे' (तै. सं. 4. 7. 10) 'दित्यौह्यस्ता रुद्राणाम्' (तै. सं. 5. 6. 15) 'यत्त्रैधातवीयम' (तै. सं 2 4 11) 'यत्त्रैधात-वीयेन यजेत' (तै. सं. 2. 4. 11) 'तिस्रस्तुर्यौह्य:' (तै. सं 5. 6. 17) 'मामतेयन्ते अग्ने' (तै. सं 1. 2. 14) 'अधिमामहान:' (तै.

---

178 *SL* VII परि 8 '....अरात्यादि च ...'
179 *SL* VII परि 7 ' अमयादि च....'
180 *SL* VII परि 7 '....सैकारादि....'
181 *SL* VII परि 8 '....दित्यौ....आदि च....'
182 *SL* VII परि 7 '....त्रैकारादि ..'
183 *SL* VII परि 8 '....तुर्यौ....आदि च....'
184 *SL* VII परि 10 '....मामादि....'
185 *SL* VII परि 6 '....सासहादि च....'
186 *SL* VII परि 8 '....पष्ठौ....आदि च ..'
187 *SL* VII परि 7 '....सपर्यादि....'
188 *SL* VII 24 '....ककुह शब्दौ....'
'....ककुभि श्रुत....'
189 *SL* VII परि 8 '....वावादि....'
190 *SL* VII परि 8 '..व्यथादि च....'

सं· 4. 6. 3) 'सासह्याम पृतन्यतः' (तै· सं· 3. 5. 3) 'वाजेषु सासहत्' (तै· सं· 1. 3. 14) 'पष्ठौही च मे' (तै· सं. 4. 7. 10) 'तिस्रः पष्ठौह्यः' (तै. सं. 5. 6. 17) 'सपर्यन्तः पुरुप्रियम्' (तै सं· 1. 8 22) सहुरी सपर्यात्' (तै. सं· 4. 2. 11) नास्य पल्पूलनेन'[191] (तै· सं· 2. 5. 5) 'वासः पल्पूलयेयुः' (तै. सं· 2 5 5) 'ककुहं रूपम्' (तै· सं. 3 3. 3) 'ककुभि शिश्रियाणः' (तै. सं· 3 3. 9) 'वा [व] दतः' (तै. सं· 3 4. 11) 'अवतान्मा व्यथितम्' (तै· सं· 1. 2. 12) 'इन्द्राग्नी अव्यथमानाम्' (तै· सं· 4. 3. 6)। सौ दित्यौ त्रै तुर्यौ पष्ठौ इत्येतानि विकृतरूपग्रहणात् तावन्मात्रमेव पर्यवस्यति। 'सुश्रवा वै नाम' (तै· सं. 3. 5. 7) 'इन्द्रः सुत्रामा' (तै. सं. 1. 7. 13) 'सुत्रामाणम्' (तै. सं. 1. 5. 11) 'दित्यवाट् च मे' (तै. सं. 4. 7. 10) 'त्रिधातोस्त्रिधातुत्वम्' (त. सं. 2. 3. 6) 'तुर्यवाट् च मे' (तै सं· 4. 7. 10) 'पष्ठवाच्च' (तै सं· 4. 7. 10) ॥ 101 ॥

वैरूवं वैष्णवैश्वायुक्[192]क्वाद्यं गोपोनसोऽयुतम्[193]।
इंकारादौ परित्यज्येमद्वितीयोपसर्गयुक्[194] ॥ 102 ॥

वैष्ण वैश्व इत्येताभ्यामयुक्तं वैकारादिपदमनिङ्ग्यं भवति। 'तावैदेह्योभवन् (तै. सं. 2. 1. 4) 'यस्य वैकंकती ध्रुवा' (तै. सं. 3. 5. 7) 'वैकंकतीमादधाति' (तै. सं 5. 1 9)। वैष्णवैश्वायुगिति किम्? 'वैश्वदेवा वै सजाताः' (तै. सं. 2. 1. 6) 'वैश्वदेवीं सांग्रहणीम्' (तै· सं· 2. 3. 9) 'वैष्णावरुणीं वशाम्' (तै. सं 2. 1. 4)। 'वैश्वानरा वै धिषणा' (प· प्र· 47) इत्युक्तत्वात् वैश्वानरशब्दस्य सर्वत्रानिङ्ग्यत्वमेव भवति। गोपः नसः इत्येताभ्यामयुक्तं कुका–

---

191 *SL* VII 43 '....पल्पूलनेन....'

192 *SL* VII परि 6 '....वैकारादिपदं वैष्णवैश्वायुक् ....'

193 *SL* VII परि 7 '....कुकारादि नसोगोपोयुतं विना।'

194 *SL* VII परि 13 '....इंकारादावीमवापोपसन्न युद्विप्रायुग्या सा श्रुतिः प्रोथते च।'

रादिपदमनिङ्ग्यं भवति। 'कुमुद्वविन्दः' (तै. सं 7. 2. 2) इत्यादि। गोपोनसोऽयुतमिति किम्? कुलगोपो यदग्निः' (तै. सं. 6. 2. 5) 'कुम्भीनसः' (तै. सं, 5. 5. 14)। ईंकाराद्यनुवाके ईमित्यनेन द्वितीयोपसर्गव्यतिरिक्तैः प्रादिभिश्च युक्तं परित्यज्य अवशिष्टानि पदानि अनिङ्ग्यानि भवन्ति। द्वितीयग्रहणेन परेत्येतदुच्यते। अस्य द्वितीयत्वं पाठक्रमापेक्षम्। 'क्रन्दते स्वाहा' (तै. सं 7. 1. 19) 'प्रोथते स्वाहा' (तै. सं. 7. 1. 19) 'प्रोथदश्वः' (तै. सं. 4. 4 1) 'आसिष्यते' (तै. सं 7. 1. 19) 'आसीनाय' (तै. सं. 7. 1. 19) 'तस्मादासीनाः' (तै. सं. ५. 1. 10, 'स्वप्स्यते' (तै. सं. 7. 1 19) 'स्वपते' (तै. सं. 7. 1 19) 'तस्मात्स्वपन्तम् (तै. सं. 6. 1. 9) 'सुप्ताय स्वाहा' (तै सं 7. 1 19) 'यथा व्याघ्रं सुप्तम्' (तै. सं. 5. 4. 10) इत्यादि। ईमद्वितीयोपसर्गकं परित्यज्येति किम्? 'ईंकाराय स्वाहा' (तै. सं. 7. 1. 19) 'अवक्रन्दते' (तै. सं. 7. 1. 19)। द्वितीयोपसर्ग्रपर्युदासेन किम्? 'पलायिष्यमाणाय स्वाहा' (तै. सं.7. 1. 19)। 'उपसर्गस्यायतौ' (अष्टा. 8. 2. 19) इति लत्वमापन्नस्य परेत्यस्य रूपमिदम्। 'शूकृताय स्वाहा पलायिताय' (तै सं. 7. 1. 13)। प्रोथत इत्यत्र उपसर्गशङ्का न कर्तव्या। उत्तरत्र प्रोथ इति दर्शनात्। द्विरुक्तस्योपसर्गस्य पदान्तरेण संयोगाभावात्। 'पप्रायम्' (तै सं 2. 1 11) 'ससमित्' (तै. सं. 2. 6. 11) 'उपोपेन्नु' (तै. सं. 2. 4. 22) इत्यादिषु पृथगवस्थानदर्शनात् 'प्रसमुपोदः पादपूरणे' (अष्टा. 8. 1. 6) इति ऋग्विषयमेव प्रादीनां द्विर्वचनविधानाच्च॥ 102॥

ईदृक्षासः सहोर्ध्वाभ्यां[195] तथेदृङ्. डेः[196] कताय च[197]।
सहोत्तरैरीदृशाय[198] प्रत्नथा च[199] हिरण्ययः[200]॥ 103॥

---

195 *SL* VII परि 17 'निस्संयुक्तयेमंत्री रास. पूर्णायुक् त्रिचतुःस्वरम्।'
196-199 *SL* VII परि 10 '... एकतायादि त्रिकमीदृङि ङ.ति त्रयम्।
प्रत्नथादिचतुष्कं चेदृशायादिचतुः श्रुतिः॥

ईदृक्ष'य इत्येतत्पदमुत्तराभ्यां पदाभ्यां सह अनिङ्ग्यं भवति।'ईदृक्षास एतादृक्षास ऊ षुणस्सदृक्षासः' (तै. सं. 4. 6. 5)। ऊर्ध्वाभ्यामिति किम्? 'प्रतिसदृक्षास इति प्रति–सदृक्षासः' (तै. सं. 4. 6 5)। तथेति–सहोर्ध्वाभ्यामित्यर्थः। 'ईदृङ् च' (तै. सं. 1. 8. 13) 'ईदृङ् वै राष्ट्रम्' (तै. सं. 2. 5. 1) 'अन्यादृङ् च' (तै. सं. 1 8 13) 'एतादृङ् च' (तै. सं. 1. 8. 13)। तथेति किम्? 'प्रतिदृङिङति प्रति–दृङ्' (तै. सं. 1. 8. 13)। चकारस्तथेत्येतदाकर्षति। 'एकताय स्वाहा' (तै. सं. 1. 1. 8) 'द्विताय स्वाहा' (तै. सं. 1. 1. 8) 'त्रिताय स्वाहा' (तै सं. 1. 1 8) 'यमेन दत्तन्त्रित एनम्' (तै. सं. 4. 6. 7) व्युत्त्रितः' (तै. सं 1. 8 10)। ईदृशायेति पदमुत्तरैस्त्रिभिः पदैः सह अनिङ्ग्यं भवति। ईदृशाय स्वाहा' (तै. सं. 7. 3. 17) 'स नो मृडातीदृशे' (तै. सं. 1. 1. 14) 'कीदृशाय' (तै. सं. 7. 3. 17) 'तादृशाय' (तै. सं. 7. 3. 17) 'सदृशाय' (तै. सं 7. 3. 17) 'सदृशं क्रामति' (तै. सं 2 4 1) 'सदृशीनां रात्रीणाम्' (तै. सं. 2. 5. 6) 'सदृश्यै सत्या ऋक्षम्' (तै. सं. 6. 2. 6)। त्रिभिरिति किम्? 'विसदृशायेति वि-सदृशाय' (तै. सं. 7. 3. 17)। चकारः सहोत्तरैरित्येतदन्वाकर्षति। 'तं प्रत्नथा [पूर्वथा] विश्वथेमथा' (तै. स. 1. 4. 9)। अन्वादेशेन किम्? 'ज्येष्ठतातिमिति ज्येष्ठ-तातिम्' (तै सं. 1. 4. ७) 'हिरण्ययो वेतसः' (तै सं. 4. 2. 9) 'हिरण्ययेन सविता' (तै. सं. 3 4. 11) 'रथैर्याता हिरण्ययैः' (तै. सं. 4. 7. 12) 'अथो योनिर्हिरण्ययी' (तै. सं. 3. 3. 10)॥ 103॥

द्व्युदात्तवद्द्विवचनमृतेऽङ्ग्ध्मातनूयुतात्।
नक्तयुक् च स्वरान्यत्वेऽप्य[201]ञ्जिरेकोपसर्जनम्॥ 104॥

---

200 *SL* VII 75 '....हिरण्ययश्रुत....'
201 *SL* VII परि 21 '....चीनाञ्चाञ्च....न्तश्रुत्....'

अङ्ग इध्मा तनू इत्येतैर्युक्तं विना द्विवचनव्यतिरिक्तम् उदात्तद्वयुक्तम् अनिङ्ग्यं भवति। अद्विवचनमित्यस्य अन्योऽप्यर्थः। द्वितीयस्य पदस्य येन द्व्युदात्तेन पदेन सहोक्तिर्नास्ति तत्पदमिङ्ग्यं न भवति। पृथगवस्थाने यावन्मात्रे द्व्युदात्तं दृष्टं तावदेव अनिङ्ग्यमित्यर्थः। यथा— 'बृहस्पतिप्रसूतः' (तै सं. 1. 6. 1) 'बृहस्पतिसुतस्य ते' (तै. सं. 1. 4 27) 'बृहस्पतिवत्यर्चा' (तै. सं. 1. 5 4) इत्यादिषु प्रसूत इत्यादिसमस्तत्वाद् द्व्युदात्तत्वेऽप्यनिङ्ग्यत्वं न भवति इत्यर्थः। 'वोढवे जातवेदः' (तै. सं. 1. 6. 2) 'नानसे यातवै' (तै. सं 6. 2. 0) 'रक्षसे हन्तवा उ' (तै सं. 1.2 14) 'वैष्णवा वै वनस्पतयः' (तै. सं. 5. 2 8) 'शुनश्शेपम्' (तै. सं. 5. 2. 1) 'क्रत्वा शचीपतिः' (तै. सं. 4. 4. 8) 'नाराशंसस्याहम्' (तै. सं. 1. 6. 4) 'आस्नात्रञ्जुहूः' (तै. सं. 2. 5. 9) 'सनाभा नेदिष्ठम्' (तै. सं. 6. 3 1) 'सत्रस्यर्ध्याहवनीयस्य' (तै. सं. 7. 5 8) 'ऋतुस्थायज्ञायज्ञियेन' (तै. सं. 5. 5 8) 'प्रजापते हृदयेन' (तै. सं. 6. 3. 10)। अद्विवचनमिति किम्? 'बम्बाविश्ववयसौ' (तै. सं. 6. 6 8)। ऋतेऽङ्गेध्मातनूयुतादिति किम्? 'अङ्गापरूंषि' (तै. सं. 2 5. 6) 'इध्माबर्हिः' (तै. सं. 2. 6. 5) 'तनूनप्त्रे' (तै. सं. 1. 2. 10)। अङ्गशब्देन उपसर्गश्च लक्ष्यते। धात्वपेक्षया व्यञ्जनानामङ्गत्वम्। उपसर्गयुक्तं द्व्युदात्तं विनेत्यर्थः। 'अन्वेतवा उ' (तै. सं. 1. 4 45)। नक्तशब्देन युक्तं द्व्युदात्तं पदमनिङ्ग्यं भवति। द्विवचनत्वादस्य पुनर्ग्रहणम्। 'नक्तोषासा'202 (तै. सं. 4. 1. 10) 'उषासानक्ता'203 (तै. सं 2. 6. 8) 'नक्तया चित्'204 (तै. सं. 4. 3. 1०)। द्व्युदात्तस्य पदस्य उपाधिभेदाद् आद्युदात्तत्वे अनुदात्तत्वेऽपि सत्यपि तदाप्यनिङ्ग्यत्वं भवति। 'बृहस्पते अति' (तै. सं. 1. 8. 22) 'रुचन्नो धत्त बृहस्पते' (तै. सं 4. 2, 9) 'बार्हस्पत्यम्' (तै. सं. 1. 8. 9) 'वनस्पते वीड्वङ्गः' (तै. सं 4. 6. 6) 'अजीजिपत वनस्पतयः' (तै. सं. 1. 7 8) 'वानस्पत्याः खलु' (तै. सं. 6. 3 11) 'शुनासीरा शुनम्' (तै. सं. 4. 4. 0) 'पितृघ्णान्नाराशंसः' (तै. सं. 4. 4. 9) 'नारा-

शंस्येन स्तोमेन' (तै. स. 1. 8. 5) इत्यादि। अञ्चतिवातूत्पन्नमेको-पसर्जनं पदमनिङ्गच भवति। एकोपसर्जनमिति पदापेक्षं नपुंसकत्वम्। उपसर्जनलक्षणं पाणिनीये द्रष्टव्यम्।[205] 'न्यङ्ङग्निश्चेतव्याः' (तै. सं. 5. 5. 3) 'न्यञ्चञ्चिनुयात्' (तै. सं. 5. ०. ८) 'मध्यान्नीचादुच्चा' (तै.सं. . 3. 14) 'प्रत्यङ्सोमो अतिद्रुतः' (तै. सं. 1. 8 11) 'प्रतीचीनम् (तै. सं. 1. 8. 9) 'प्रत्यञ्चः परेत्य (तै. सं. 6. 2 11) 'त्रीणि प्रतीचीनानि' (तै. सं. 2. 6. 1) 'देवाच्या कृता' (तै. सं. 4. 4 4) 'विश्वाची च घृताची च (तै. सं. 4. 4. 1) 'दध्यङ्ङाथर्वणः' (तै. सं. 5. 1. 4) 'ऐक्षवी तिरश्ची' (तै. सं. 6. ४. 1) 'यत्तिरश्ची' (तै. सं. 5. ०. 7) 'यात्तिरश्चीनम्' (तै. सं. 2. 6. 8) 'विषूची प्रहरति' (तै. सं. 6. 3. 9) 'तस्माद्विष्वञ्चौ (तै सं 5 2. 10) 'यद्विषूचीनमारण्यान्' (तै. सं. 5. 2 9) 'इन्द्रो दधीचः' (तै. सं. 5. 6. 6) इत्यादीनि बहून्युदाहरणानि। एकोपसर्जनमिति किम्? 'सुप्राङ्. जौ' (तै सं. 4 ०. 8) 'सो नः सुप्राची' (तै सं. 1. 2. 4) 'कवातिर्यङ्ङ्व' (तै. सं 1. 5. 9) 'मा ते मनो विष्वद्रियक्' (तै. सं. 1. 7. 13) 'अस्मद्रियक्' सम्मीहृ' (तै. सं. 3. ४. 11) देवद्रीवा मनसा' (तै. सं. 4. 6 7) इत्यादि॥ 104॥

असंख्यानिपरप्रादिः संख्या[206] द्वापर[207]ऋक्षमम्[208]।
एधात्वान्त न महियुक्[209] प्रथमः[210] पोड[211]शक्वंता[212] ॥105॥

---

202-204 *SL* VII 38 '....नक्तोषासानक्तया....'
VII 21 '....उपासानक्ता....'

205 'उपसर्जनं पूर्वम् (अष्टा. 2. 2. 30)

206, 207 c. f. *SL* VII परि 21 '....अपि द्वादिश्च संख्याश्रुद् विहाय परनिप्रयुक्।' Also vide *SL* VII 36 '....द्वापरो....'

208 *SL* VII 22 '....ऋक्षमश्रुत्....'

संख्यादि नि पर प्र इत्येवमादिं च संख्यां वर्जयित्वा संख्यावाचकं पदमनिङ्ग्यं भवति । 'त्रयो वा अग्नयः' (तै. सं. 2. 5. 8) 'तिस्र-स्तुर्यौह्यः' (तै. सं. 5. 6. 17) 'त्रीणि वाव' (तै सं. 3. 2 2) 'चत्वा-रो वीराः' (तै. सं 7. 1. 8) 'चतस्र आशाः' (तै. सं. 5. 7 4) 'चत्वार्यङ्गानि (तै. सं. 5. 6. 9) 'विंशत्यै' (तै. सं. 7. 2. 13) 'त्रिंशते' (तै. सं. 7. 2. 7) 'न तृतीयञ्चित्वा' (तै. सं. 5. 6. 8) 'तुरीयो यज्ञः' (तै सं. 4. 6. 3) इत्यादि । असंख्यानिपरप्रादिरिति किम्? 'त्रयोदश मासाः' (तै. सं. 5. 6. 7) 'पञ्चदशैताः' (तै. सं 7. 3. 7) 'नियुताय स्वाहा' (तै. सं. 7. 2 20) 'नियुतञ्च' (तै. सं. 4. 4. 11) 'परार्धाय स्वाहा' (तै. सं. 7. 2. 20) 'परार्धश्च' (तै. सं. 4. 4. 11) 'प्रयुताय स्वाहा' (तै. सं. 7. 2. 20) 'प्रयुत-ञ्च' (तै. सं. 4. 4. 11) । द्वापरेत्येतद् विशेषणत्वेन लक्ष्यत्वेन च गृह्य-ते । द्वापरेति स्त्रीलिङ्गनिर्देशात् सान्निध्याच्च संख्येति गम्यते । द्वा इत्य-स्मात्परं संख्यावाचक पदमनिङ्ग्यं भवति । संख्यादित्वे तत्पुनर्गृह्यते । 'द्वादश च मे' (तै. सं. 4. 7. 11) 'वर्चो द्वाविंशः' (तै. सं. 4. 3. 8) 'द्वात्रिंशच्च मे' (तै. सं. 4. 7. 11) 'अदित्यै द्वादशी' (तै. सं. 5 7. 22) । लक्ष्ये च-'द्वापरोयानाम्' (तै सं. 4. 3. 3 । द्वापरेत्यस्य आ-कारान्तत्वे 'ऋत्यकः' (अष्टा. 6. 1. 128) इति प्रकृतिभावो ह्रस्वश्च । एवम्, 'ओजसीन ऋग्मियाणि' (प. प्र. 125) इत्यत्रापि द्रष्टव्यम् । 'जगत्या ऋक्षममृक्षमात्' (तै. सं. 4. 3 2) । एधान्तं महि इत्येत-द्युक्तं विना त्वान्तं च पदमनिङ्ग्यं भवति । महियुगिति त्वान्तस्यैव विशे-षणम् । अन्यासंभवात् । 'द्वेधा वा अग्निम्' (तै. सं. 5 7. 6) 'विष्णु-

---

209 c. f *SL* VII परि 21 '....त्वान्तं मह्याभियुग्विना....'

210 c. f *SL* VII परि 8 '....जशब्दायुक्प्रथादि च....'

211 *SL* VII 67 '....षोडशश्रुत्....'

212 *SL* VII 22 '....ऋक्वता....'

स्त्रेधात्मानम्'[213] (तै. सं. 2. 4. 12) 'तदुदित्वा वाचम्' (तै. सं. 1. 6 8) 'मथित्वा तस्य' (तै. सं 5 1 9) 'गृहीत्वा सोमाय' (तै. सं. 3. 3. 4) इत्यादि । न महियुगिति किम् ? 'अन्तरिक्षं महित्वा' (तै. सं. 1. ·. 3) । 'अभिसत्वा सहोजाः' (तै सं. 4. 6. 4) । इत्यत्र 'सभेयस्सत्त्वा सस्यायै' (तै. प्रा. 6. 12) इति षत्वनिषेधसामर्थ्यादेव इङ्ग-यत्वं सिद्धम् । 'ऋत्विजां प्रथमो युज्यते' (तै. सं 3. 1. 10) 'प्रथ-मेष्टकोपधीयमाना' (तै सं. 5. 2. 8) 'प्रथमे मासि' (तै. सं 7 5. 3) । षोडशशब्दोत्पन्नं पदमनिङ्ग्यं भवति । 'षोडश च मे' (तै सं. 4 7. 11) 'षोडशः स्तोमः' (तै. सं. 4. 3. 12) 'तत्षोडश्यभवत्' (तै. सं. ·. 6 11) । अनयोः संख्यावाचकत्वेऽपि प्रोपसृष्टशङ्कया सं-ख्यादित्वाच्च पुनर्ग्रहणम् । 'सुष्टभा स ऋक्वता' (तै. सं. 2. 3. 14) ॥ 105 ॥

अक्षितिश्च म इत्यादि वृक्षाख्यं न विकङ्कत ।
त्रिस्वरञ्चाच्छदाद्यष्टुब्विंकृद्यत्त्रिनि (? वि) युग्व्यच ॥ 106 ॥

'अक्षितिश्च मे' इत्याद्यनुवाकशेषगतं पदमनिङ्ग्यं भवति । 'आक्षितिश्च मे'(तै. सं. 4. 7. 4)कूयवाः(तै. सं. 4. 7 4)प्रियङ्गवः'[214] (तै. सं. 4. 7. 4)'अणवः' [215](तै. सं. 4. 7. 4)प्रियङ्गवो भारुताः[216] (तै. सं. 2. 2. 11) 'दुग्धे प्रैयङ् गवम्[217] (तै. सं. 2. .2 11) 'श्याम-काश्च मे [218] (तै. सं. 4. 7. 4) 'यच्छ्यामाकः'[219] (तै. सं 2. 3. 3 'श्यामाकञ्चरुम् [220] (तै. सं. 1. 8. 10) 'नीवाराश्च मे'[221] (तै. सं.)

---

213 *SL* VII 33 '....त्रेधा....'
214, 216, 217 *SL* VII 46 '....प्रैयंगवं प्रियंगवः....'
215 *SL* VII 11 '....अणवः....'
218-220 *SL* VII 66 '....श्यामाकशब्दवत् ...'

4 7. 4) 'नैवारञ्चरुम्'[222] (तै. सं. 1. ८. 10)। वृक्षविशेषवाचकं पदं विकङ्कत इत्येतद्वर्जयित्वा अनिङ्ग्यं भवति। 'मारुतोश्वत्थः' (तै. सं. 3. 5. 7) 'आश्वत्थे पात्रे'[223] (तै. सं. 4. 2. 6) 'आश्वत्थी हविर्धानञ्चाग्नीध्रञ्च'[224] (तै. सं. 3 5. 7) 'ऊर्वा उदुम्बरः'[225] (तै. सं. 2. 1. 1) 'उदुम्बरेणोर्जम्'[226] (तै. सं. 7. 3. 14) 'औदुम्बर आश्वत्थः'[227] (तै. सं. 3. 4. 8) 'औदुम्बरी वा चयति'[228] (तै. सं. 5. 1. 10) 'स खादिरोभवत्' (तै. सं. 3. 5. 7) 'तस्य खादिरः स्रुवः' (तै. सं. 3. 5. 7) 'न्यग्रोधेन वनस्पतीन्'[229] (तै. सं. 7. 3. 14) 'तत्पूतुद्रुव भवत्'[230] (तै. सं. 6. 2. 8) 'तद्गुल्गुलु' (तै. सं. 6. 2. 8) 'पौतुद्रवाः परिधयः'[231] (तै. सं. 6. 2. 8) 'स प्रक्षोभवत्'[232] (तै. सं. 6. 3. 10) 'वज्रः कार्ष्मर्यः'[233] (तै. सं. 5. 2. 7)। न विकंकत इति किम्? 'ततो विकङ्कत उदतिष्ठत्' (तै. सं. 3. 4. 7) 'तद्विकङ्कतं प्राविशत्' (तै. सं. 6. 4. 10) 'यस्य वैकङ्कती ध्रुवा भवति' (तै. सं. 3. 5. 7) इत्यत्र वैपूर्वत्वादेव अनिङ्ग्यत्वं भवति। ष्टुवादियुक्तं वर्जयित्वा आच्छदाद्यनुवाकशेषगतं त्रिस्वरं पदमनिङ्ग्यं भवति। चकारात्प्रागेव द्विस्वर गम्यते। 'आच्छच्छन्दः'[234]

---

221 *SL* VII 38 '....नीवारा....'
222 *SL* VII 39 '...नैवार श्रुत्....'
223, 224 *SL* VII 13 '... आश्वत्थश्रुतौ....'
225, 226 *SL* VII 21 '....उदुम्बरशब्दः ..'
227, 228 *SL* VII 23 '....औदुम्बरश्रुतिः....'
229 *SL* VII 40 '... न्यग्रोधश्रुत्....'
230 *SL* VII 45 '....पूतुद्रुश्रुत्...'
231 *SL* VII 47 '....पौतुद्रुव श्रुतिः....'
232 *SL* VII 49 '....प्रक्षश्रुतिः....'
233 *SL* VII 25 '....कार्ष्मर्य....'

(तै· सं· 4. 3. 12) 'सिन्धुश्छन्द:'[235] (तै· सं. 4. 3 12) 'सिन्धूनां पतये' (तै· सं. 4. 6. 2) 'ता वो नामानि सिन्धव:' (तै. सं. 5. 6. 1) 'समुद्रञ्छन्द:' (तै. सं· 4. 3. 1·) 'समुद्र उदरम्' (तै. सं. 7. 5. 20) 'सलिलञ्छन्द:'[236] (तै· सं. 4. 3. 12) (सलिलाय त्वा'[237] (तै. सं. 4. 4. 6) 'बृहच्छन्द:' (तै· सं 4. 3. 12) 'षट्त्रिंशदक्षरा बृहती' (तै. सं· 2. 5. 10) 'बार्हता:'[238] (तै. सं· 3. 5. 10) 'ककुच्छन्द:' (तै. सं· 4. 3. 12) 'ककुत्पञ्चदश' (तै. सं. 7. 2. 5) 'ककुदेकविंश:' (तै. स. 7. 2. 5) इत्यादि। ष्टुवादियुक्तं वर्जयित्वेति किम्? सष्टुविति स—स्तुप् छन्द:' (तै सं· 4. 3. 12) 'अनुष्टुप् छन्द:' (तै. सं. 4. 3. 12) 'वयस्कृच्छन्द:' (तै· सं. 4. 3. 12) 'संयच्छन्दो वियच्छन्द:' (तै· सं· 4 3. 12) 'त्रिककुच्छन्द.' (तै. सं· 4. 3. 12) 'विशालञ्छन्द:' (तै. सं. 4. 3. 12) 'विष्पर्धाश्छन्द:' (तै · सं. 4. 3. 12)। व्यच इत्येतत्पदमनिङ्ग्यं भवति। त्रियुक्तशङ्कयेदं पुनर्गृह्यते। 'व्यचश्छन्द:' (तै· सं. 4. 3. 12) ॥ 106 ॥

चक्रीवती त्रैशिकस्य दशिन्यपि चतुस्वरम्।
हिमवाग्राजहंसान्यपृश्न्यन्धस्वाक्षलोहितै: ॥ 107 ॥
शीर्णोजिह्वोदरग्रीवमहारामनभोमृगै:।
शित्याञ्जिजस्थूरसीरस्थन्दाभ्यामव्योपसर्गकै: ॥ 108 ॥
शुकैतारिशवालैश्च युक्तं हित्वाखिलं पदम्।
आदकामाखुराग्नेन्द्राव्याघ्रो न्यङ्कुर्विदीगय: ॥ 109 ॥

---

234 *SL* VII 17 '....आच्छत्....'
235 *SL* VII 68 '....सिन्धु:....'
236, 237 *SL* VII 68 '....सलिल श्रुति:....'
238 *SL* VII 50 '....बार्हत श्रुत....'

'चक्रीवती भवतः' (तै. स 7. 2. 1)। त्रैशिकसंज्ञस्य प्रश्न-त्रयस्य दशिनीगतं चतुस्वरमनिङ्गयं भवति हिमादिभिर्युक्तं वर्जयित्वा। अपिशब्दात्प्रागेव त्रिस्वरं द्विस्वरं च गम्यते। चतुस्वरमिति पदापेक्षं नपुंसकम्। 'इन्द्राय राज्ञे सूकरः'[239] (तै. सं. 5. 5. 11) 'बला-थाजगरः'[240] (तै. सं. 5. 5. 14) 'अजगरेण सर्पान्'[241] (तै. सं. 7. 3. 14) 'अप्सरसामरण्याय सृमरः'[242] (तै. सं. 5. 5. 16) 'अ-प्सरसौ यातुधाना:'[243] (तै. सं. 4. 4. 3) मरीचयोप्सरसः'[244] (तै. सं. 3. 4. 7) 'अश्वस्तूपरः'[245] (तै. सं. 5. ७. 23) यत्तूपरस्तदश्वा-नाम्'[246] (तै. सं. ०. 1. 1) 'तस्मात्तूपरा वार्षिकी'[247] (तै. सं 5 5. 1) 'रोहितो धूम्ररोहितः' (तै सं. 5. 6. 11) 'उन्नत ऋषभो वामनः' (तै. सं. 5. 6. 14) 'ऋषभेण क्रीणाति' (तै सं. 6. 1. 10) 'वामनो दक्षिणा' (तै. सं. 1. 8. 17) 'किकदीविर्विदीगयः'[241] (तै. सं. 5. 6. 22) 'श्येनेन किकिदीविना:'[249] (तै. सं. 4. 2. 6) 'पिशङ्गास्त्रयो वासन्ता:'[250] (तै. सं. 5. 6. 23) 'वासन्तिकावृतू'[258] (तै. सं, 4. 4. 11) 'स्तेगान्दंष्ट्राभ्यां मण्डूकाञ्जम्भ्येभिः' (तै. सं. 5. 7. 11) 'मण्डूकिताभिः' (तै. सं. 4. 6. 1) 'मण्डूकेन विकर्षति' (तै. सं. 5. 4 4) 'अशनिं मस्तिष्केण'[252] (तै. सं. 5. 7. 12) 'मस्तिष्काय स्वाहा'[253] (तै. सं. 7. 3. 16) 'कपिञ्जलन्त्साम कुष्ठि-

---

239 *SL* VII 69 '....सूकरः...'

240, 241 *SL* VII 6 '....अजगरशदः....'

242-244 *SL* VII 2 '....अप्सरसश्रुत्....'

245-247 *SL* VII 34 '....तूपर....शब्दौ....'

248, 249 *SL* VII 24 '....किकिदीवि....श्रुत्....'

250,251 *SL* VII 61 वासन्तवासन्तिक....श्रुत्....'

252,253 *SL* VII 55 '....मस्तिष्कश्रुत्....'

254,255 *SL* VII 24 '... कपिञ्जल....श्रुत....'

काभिः'[254] (तै. सं. ०. 7. 13) 'स कपिञ्जलोभवन्'[255] (तै. सं. 2. 5. 1) 'इन्द्राग्नी शिखण्डाभ्याम्'[256] (तैसं. 5. 7 25) 'शिखण्डेभ्यः स्वाहा'[257] (तै. सं. 7. 3. 16) 'पवित्रं पोत्राभ्याम्' (तै. सं. 5. 7. 25)। अन्वादेशेन किम्? केन मोपैष्यसीति' (तै. सं. 5. 7. 5) 'जनयन्नुपागाम्' (तै. सं. 5. 7. 2) 'उपमामुपागुः' (तै. सं. 4. 7. 15) 'सत्यानृते अवपश्यन्' (तै. सं. 5. 6. 1) 'प्रमुञ्चमाना भुवनस्य' (तै. सं. 3. 1. 4) 'यत्स्मयेत नग्नम्भावुकाः' (तै. सं. 6. 1. 3) अनूर्ध्वंम्भावुकम्' (तै. सं. 2. 6. 5) 'अनतिवादुक एनम्' (तै. सं. 6. 4. 5) 'प्रजानां परापातुकाः स्युः' (तै. सं. 6. 1. 3) 'यदु भावपवित्रौ' (तै. सं. 6. 4. 6) 'नक्षत्राणि प्रतिरूपेण' (तै. सं. 5. 7. 20) 'कृत्तिका नक्षत्रम्' (तै. सं. 4. 4. 10) 'समुद्रमुदरेण' (तै. सं. 5. 7. 16) 'समुद्र उदरम्' (तै. सं. 5. 7. 25)। हिमादियुक्तं ह्रित्वेति किम्? 'हिमवतो हस्ती' (तै. सं. 5. 5. 11) 'पुरुषवागारण्यः' (तै. सं. 5. 5. 12) 'पैंगराजो भगाय' (तै. सं. 5. 5. 13) हंससाचिरिन्द्राण्यै' (तै. सं 5. 5. 20) 'अन्यवापोर्धमासानाम्' (तै. सं. 5. 5. 15) 'ऊर्ध्वपृश्निः' (तै. सं. 5. 6. 12) 'वनिष्ठुरन्धाहे स्थूरगुदा' (तै. सं. 5. 7. 17) 'मन्यवे स्वजः' (तै. सं. 5. 5. 14) 'श्येताक्षः श्येतग्रीवः' (तै. सं. 5. 6. 11) 'लोहिताहिस्ते' (तै. सं. 5. 5. 14) 'नीलशीर्ष्णी' (तै. सं. 5. 5. 11) 'सरस्वतीञ्जिह्वाग्रेण' (तै. सं. 5. 7. 11) 'धात्रे पृषोदरः' (तै. सं. 5. 5. 23) 'कृष्णग्रीवः सारस्वती' (तै. सं. 5. 5. 22) 'महेन्द्राय कामाय परस्वान्' (तै. सं. 5. 5. 21) 'अघोरामः' (तै. सं. 5. ०. 22) 'पर्जन्या नभोरूपाः' (तै. सं. 5. 6. 19) 'तूपरो गोमृगः' (तै. सं. 5. 5. 23) 'शितिकक्षी वार्ध्राणसः' (तै. सं. 5. 5. 20) ,रोहिताञ्जिरनड्वान्' (तै. सं. 5. 5. -4) 'स्थूरगुदा सर्पान्' (तै.

---

256,257 *SL* VII 64 '.. शिखण्ड....श्रुतिः....'

